# KUSUMANJALI,

**A treatise on the Proof of the existence of God;**

BY

**NYAYACHARYA SRI UDAYANACHARYA,**

WITH THE COMMENTARY OF

HARI DAS BHATTACHARYA;

Edited with his own notes

BY

PANDIT AMBADAS SASTRI

PROFESSOR,

RANAVIR SANSKRIT PATHSALA, BENARES.


PUBLISHED BY

HARI KRISHNA DAS

PROPRIETOR,

GUPTA BOOK DEPOT, KACHAURI GALI, BENARES.

Subject matter printed at SASTRA PRAKASAK SAMITI Press,

**and Cover printed by**

**GAURI SHANKAR LAL MANAGER,**

**at the Chandraprabha Press.**

BENARES.

1913.

# कुसुमाञ्जलिः

न्यायाचार्यपदाङ्कित-महामहोपाध्याय-
श्रीमदुदयनाचार्यविरचितः ।

पण्डितधुरीण-श्रीहरिदासभट्टाचार्यकृतव्याख्योपेतः ।
काशीस्थरणवीरसंस्कृतपाठशालायां वेदान्ताध्यापकेन
श्रीअम्बादासशास्त्रिणा विरचितया टिप्पण्या
समलंकृतः तेनैव परिशोधितश्च ।



सोऽयं वाराणसीवास्तव्येन विद्याविनोदिना (गुप्त बुक डिपो)
कार्यालयाऽध्यक्षेण श्रीहरिकृष्णदासेन प्रकाशितः ।



Subject matter printed at the Sastra Prakashaka Samiti Press
and Cover Printed by
Gauri Shankar Lal Manager, at the Chandraprabha Press, Benares.

1913.

# विशेष सूचना

---

ग्राहकों से निवेदन है कि जिस पुस्तक पर हमारी मोहर न हो वह पुस्तक चोरी की समझी जायेगी और उसके लाने वाले यथोचित पारितोषिक पावेंगे—

निवेदक
हरिकृष्ण दास

# प्रस्तावना ।

इह खलु लोके सर्वोऽपि लोकनिवहस्संसारचक्रे परिभ्रमन्ननेकदुःखनिवहसन्तप्तस्तान्निवृत्तये झटिति मोक्षार्थं प्रवर्तते। स च मोक्षोऽदृष्टद्वारा स्वात्मसाक्षात्कारद्वारा वा ईश्वरमननसाध्यः "तमेव विदित्वाऽतिमृत्युमेति नाऽन्यः पन्था विद्यतेऽयनायेत्यादिश्रुत्या" मननाख्यभगवदुपासनाया मोक्षसाधनत्वावगतेः, स्वात्मसाक्षात्कारस्यापि यदात्मानं विजानीयादहमस्मीति पूरुषः। किमिच्छन् कस्य कामाय संसारमनुसंसरेदित्यादिवचनप्रामाण्यान्मोक्षहेतुत्वम्। तथा च मोक्षहेत्वीश्वरमननरूपतदुपासनार्थमेवास्मिन्कुसुमाञ्जलिप्रकरणे परमात्मपदाभिधेयस्येश्वरस्य व्यवस्थापनं कृतमाचार्येण। सत्स्वपि कणादगौतमादिप्रणीतेषु दर्शनाद्यनेकन्यायग्रन्थेषु किमर्थमयमायास इति चेत्, सत्यं स्वमताभिप्रेतपदार्थविवेचनाडम्बराडम्बितेषु तेषु प्रतिवादिविप्रतिपत्तिनिरासानुपलब्धेः, तन्निरसनं विना च स्वमतव्यवस्थापनमयुक्तमिति तन्निरसनायैवायमायासः श्रीमदुदयनाचार्यस्य कुसुमाञ्जलिग्रन्थविरचने। ग्रन्थेचास्मिन् पञ्च स्तबकाः सन्ति। यद्यपि मूलकारिकान्ते (इति प्रथमस्तबकः) इत्यादिः प्राचीनपुस्तकेषु पाठो न दृश्यते तथापि यत्र तत्रावान्तरप्रकरणोपसंहारकारिकाणां दर्शनात्सर्वैरेव व्याख्यातृभिः स्तबकविभागस्य अंगीकाराच्च स्तबकविभागः स्वीकृतः। तेषु च स्तबकेषु यथाक्रमं चार्वाक-

मीमांसक-सौगत-दिगम्बर-सांख्यानामीश्वरासिद्धिप्रतिकूला विप्रतिपत्तयः प्रपञ्च्याचार्येण निराकृताः। सोऽयं किरणावल्यात्मतत्त्वविवेकादिप्रसिद्धग्रन्थकर्ता उदयनाचार्यः इतः पूर्वं पञ्चाधिकैकादशशतमिते (११०५) वर्षे, नवाधिकसप्तशतमिते (७०९) शकवर्षे वा प्रादुर्भूतस्य भगवतः शंकराचार्यस्य कियत्कालानन्तरं प्रादुर्बभूवेति निर्णीयते, तर्काम्बराङ्कप्रमितेष्वतीतेषु (९०६) शकान्ततः। वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीमित्युक्तेः।

यद्यप्ययं कुसुमाञ्जलिग्रन्थो हरिदासभट्टाचार्यकृतव्याख्यासनाथस्तथापि तद्व्याख्याया अतिसंक्षिप्तत्वात्स्थलविशेषेषु दुर्बोधत्वाच्च कारिकातात्पर्यं सर्वत्र न सुस्पष्टम्; अतः (गुप्तबुक्डिपो) कार्यालयाध्यक्षेण हरिदासात्मजश्रीहरिकृष्णदासगुप्तेन प्रोत्साहितोऽहमन्यविवृतीनां अतिविस्तृततयाऽतीवगभीराशयं हरिदासभट्टाचार्यवचनं विषमस्थलटिप्पण्या विशदीकर्तुं प्रवृत्तोऽस्मि। अस्या मुद्रणाधिकारश्चोक्तगुप्तमहाशयस्यैव दत्तस्तेन च विद्यार्थिजनोपकारार्थं स्वद्रव्यव्ययेनेयं मुद्रयित्वा प्रकाशिता। अस्याश्च सदसत्त्वविवेचनाय सुधिय एव प्रभवन्ति विनयाञ्जलियाचिताश्च साधवः प्रमादात् मम स्खलितदोषपरिहारेणैतस्याः पठनपाठनादौ यत्नसंपादनेन मम श्रमं सफलयन्तु। प्रीयताश्चानेन प्रथमोद्यमेन श्रीभगवान् मृडानीपतिरिति शिवम्।

ज्येष्ठशुद्धपञ्चम्यां
इन्दुवासरे १९७० }

अम्बादास शास्त्री।

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| पूर्वर्धनैव | पूर्वार्धेनैव | २ | ३ |
| चिद्रूप. | चिद्रूपः | ६ | ४ |
| सिषाधपिषा | सिषाधयिषा | ७ | १४ |
| अचेतनादृष्ट जन्यकार्ये | अचेतनादृष्टजन्यकार्ये | ८ | १७ |
| वन्ह्युत्पत्पा | वन्ह्युत्पत्या | ११ | २१ |
| स्वभावे- | स्वभावो | १२ | १५ |
| मेद् | भेद् | १३ | २० |
| सृष्टि र्व्यर्थेत्पा | सृष्टिर्व्यर्थेत्या | १४ | १९ |
| वन्ह्यदौ | वन्ह्यादौ | १५ | १४ |
| विनाशवत्व | विनाशकत्व | १६ | २ |
| शक्तन् | शक्तून् | १७ | ११ |
| व्रीहपादि | व्रीह्यादि | १७ | १८ |
| व्रीहपादि | व्रीह्यादि | ,, | १९ |
| तथा | तया | १९ | ४ |
| वच्छिन्नस्वाभाव्ये | वच्छिन्नत्वस्वाभाव्ये | २० | १३ |
| कैवल्यावथान | कैवल्यावस्थान | २१ | २१ |
| मुत्थाप्प | मुत्थाप्य | २२ | २० |
| स्परणा | स्मरणा | २३ | १८ |
| निरस्पति | निरस्यति | २३ | २२ |
| उन्नेतया | उन्नेयतया | २५ | ५ |
| समवापि | समवायि | २८ | १९ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| शक्तित्वात् | शक्तत्वात् | २९ | २१ |
| सङ्कर | शङ्का | ३० | १४ |
| धीगुणः | धीर्गुणः | ३१ | ४ |
| गुणे | गुणो | ३१ | १९ |
| मानाभावत् | मानाभावात् | ३२ | १० |
| श्रात्मा | आत्मा | ४० | १२ |
| नन्वत्मत्वं | नन्वात्मत्वं | ४१ | १ |
| उपजीवकाः | उपजीवकाः आश्रयाः | ४४ | ७ |
| अभात्वे | अभावत्वे | ४५ | १७ |
| साधक | साधकत्व | ५५ | २१ |
| प्रतृात्ति | प्रवृात्ति | ६७ | १९ |
| जोजन | योजन | ६८ | ३ |
| दुर्बले | दुर्बलैः | ७० | १० |
| स्वारस्यत् | स्वारस्यात् | ७२ | १९ |
| भावेनैव | भावनैव | ७७ | १४ |
| न्वयिनां | न्वयिनी | ७९ | ४ |
| दुर्शनसामर्थं | दर्शनासमर्थं | ८४ | २४ |



# कुसुमाञ्जलिकारिकाः ।

## प्रथमः स्तबकः ।

सत्पक्षप्रसरः सतां परिमलप्रोद्बोधबद्धोत्सवो
विम्लानो न विमर्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः ।
ईशस्यैष निवेशितः पदयुगे भृङ्गायमाणं भ्रम-
च्चेतो मे रमयत्वविघ्नमनघो न्यायप्रसूनाञ्जलिः ॥ १ ॥
स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिण' ।
यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥ २ ॥
न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ॥ ३ ॥
सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः ।
प्रत्यात्मनियमाद्भुक्तेरस्ति हेतुरलौकिक. ॥ ४ ॥
हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च ।
स्वभाववर्णना नैवमवधेर्नियतत्वत ॥ ५ ॥
प्रवाहो नादिमानेष न विजात्येकशक्तिमान् ।
तत्त्वे यत्नवता भाव्यमन्वयव्यतिरेकयोः ॥ ६ ॥
एकस्य न क्रमः क्वापि वैचित्र्यञ्च समस्य न ।
शक्तिभेदो न चाभिन्नः स्वभावो दुरतिक्रमः ॥ ७ ॥
विफला विश्ववृत्तिर्नो न दुःखैकफलापि वा ।
दृष्टलाभफला वापि विप्रलम्भोऽपि नेदृशः ॥ ८ ॥
चिरध्वस्तं फलायालं न कर्मातिशयं विना ।
सम्भोगो निर्विशेषाणां न भूतैः संस्कृतैरपि ॥ ९ ॥

भावो यथा तथाऽभाव. कारणं कार्यवन्मतः ।
प्रतिबन्धो बिसामग्री तद्धेतुः प्रतिबन्धकः ॥ १० ॥
संस्कारः पुस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः ।
स्वगुणाः परमाणूनां विशेषाः पाकजादयः ॥ ११ ॥
निमित्तभेदससर्गादुद्भवानुद्भवादयः ।
देवताः सान्निधानेन प्रत्यभिज्ञानतोऽपि वा ॥ १२ ॥
जयेतरनिमित्तस्य वृत्तिलाभाय केवलम् ।
परीक्ष्यसमवेतस्य परीक्षाविधयो मताः ॥ १३ ॥
कर्तृधर्मा नियन्तारश्चेतिता च स एव नः ।
अन्यथाऽनपवर्गः स्यादससारोऽथ वा ध्रुवः ॥ १४ ॥
नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात् ।
वासनासंक्रमो नास्ति न च गत्यन्तरं स्थिरे ॥ १५ ॥
न वैजात्यं विना तत् स्यात् न तस्मिन्ननुमा भवेत् ।
विना तेन न तत्सिद्धिर्नाध्यक्षं निश्चयं विना ॥ १६ ॥
स्थैर्यदृष्ट्योर्न सन्देहो न प्रामाण्ये विरोधतः ।
एकतानिर्णयो येन क्षणे तेन स्थिरे मतः ॥ १७ ॥
हेतुशक्तिमनादृत्य नीलाद्यपि न वस्तु सत् ।
तद्युक्तं तत्र तच्छक्तमिति साधारणं न किम् ॥ १८ ॥
पूर्वभावो हि हेतुत्वं मीयते येन केनचित् ।
व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा न हि ॥ १९ ॥
इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो
मूलत्वात् प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता ।
देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः
साक्षात् साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम ॥२०॥

---

## अथ द्वितीयः स्तबकः ।

प्रमायाः परतन्त्रत्वात् सर्गप्रलयसम्भवात् ।
तदन्यस्मिन्नविश्वासान्न विधान्तरसम्भवः ॥ १ ॥
वर्षादिवद्भवोपाधिर्वृत्तिरोधः सुषुप्तिवत् ।
उद्भिद्वृश्चिकवद्वर्णा मायावत् समयादयः ॥ २ ॥
जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणो ।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ॥ ३ ॥
कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन्
हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीडति ।
त देवं निरवग्रहस्फुरदभिध्यानानुभावं भवं
विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्तेष्वपि ॥ ४ ॥

---

## अथ तृतीयः स्तबकः ।

योग्यादृष्टिः कुतोऽयोग्ये प्रतिबन्धिः कुतस्तराम् ।
कायोग्यं बाध्यते शृङ्गं कानुमानमनाश्रयम् ॥ १ ॥
व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता ।
अभावविरहात्मत्वं वस्तुनः प्रतियोगिता ॥ २ ॥
दृष्टोपलम्भसामग्री शशशृङ्गादियोग्यता ।
न तस्यां नोपलम्भोऽस्ति नास्ति सानुपलम्भने ॥ ३ ॥
इष्टासिद्धिः प्रसिद्धेऽशे हेत्वासिद्धिरगोचरे ।
नान्या सामान्यत. सिद्धिर्जातात्रपि तथैव सा ॥ ४ ॥
आगमादेः प्रमाणत्वे बाधनादनिषेधनम् ।
आभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धता ॥ ५ ॥
दृष्ट्यदृष्ट्योर्न सन्देहो भावाभावविनिश्चयात् ।
अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम् ॥ ६ ॥

शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥ ७ ॥

परस्परविरोधे हि न प्रकारान्तरस्थितिः ।
नैकताऽपि विरुद्धानामुक्तिमात्रविरोधत. ॥ ८ ॥

साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते ।
अर्थापत्तिरसौ व्यक्तमिति चेत् प्रकृतं न किम् ॥ ९ ॥

सम्बन्धस्य परिच्छेदः संज्ञायाः सञ्ज्ञिना सह ।
प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः ॥ १० ॥

सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ।
समयो दुर्ग्रहः पूर्वं शब्देनानुमयापि वा ॥ ११ ॥

श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ।
पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः ॥ १२ ॥

अनैकान्तः परिच्छेदे सम्भवे च न निर्णयः ।
आकाङ्क्षा सत्तया हेतुर्योग्यासत्तिरबन्धना ॥ १३ ॥
निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये ।
व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता ॥ १४ ॥
व्यस्तपुंदूषणाशङ्कैः स्मारितत्वात् पदैरमी ।
अन्विता इति निर्णीते वेदस्यापि न तत् कुतः ॥ १५ ॥
न प्रमाणमनाप्तोक्तिर्नादृष्टे क्वचिदाप्तता ।
अदृश्यदृष्टौ सर्वज्ञो न च नित्यागम' क्षमः ॥ १६ ॥
न चासौ क्वचिदेकान्तः सत्त्वस्यापि प्रवेदनात् ।
निरञ्जनावबोधार्थो न च सन्नपि तत्परः ॥ १७ ॥
हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा ।
तदभावात् प्रवृत्तिर्न कर्मवादेऽप्ययं विधिः ॥ १८ ॥

अनियमस्थस्य नायुक्तिर्नानियन्तोपपादकः ।
न मानयोर्विरोधोऽस्ति प्रसिद्धे वाऽप्यसौ समः ॥ १९ ॥
प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात् ।
अज्ञातकरणत्वाच्च भावावेशाच्च चेतस ॥ २० ॥
प्रतियोगिनि सामर्थ्याद्व्यापाराव्यवधानतः ।
अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात् ॥ २१ ॥
अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात् ।
प्राप्त्यन्तरेऽनवस्थानान्न चेदन्योऽपि दुर्घटः ॥ २२ ॥
प्रत्यक्षादिभिरेभिरेवमधरो दूरे विरोधोदयः
प्रायोयन्मुखवीक्षणैकविधुरैरात्माऽपि नासाद्यते ।
तं सर्वानुविधेयमेकमसमस्वच्छन्दलीलोत्सवम्
देवानामपि देवमुद्भवदतिश्रद्धाः प्रपद्यामहे ॥ २३ ॥

---

## अथ चतुर्थः स्तबकः ।

अप्राप्तेरधिकप्राप्तेरलक्षणमपूर्वदृक् ।
यथार्थोऽनुभवो मानमनपेक्षतयेष्यते ॥ १ ॥
स्वभावनियमाभावादुपकारो हि दुर्घटः ।
सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा ॥ २ ॥
अनैकान्तादसिद्धेर्वा न च लिङ्गमिह क्रिया ।
तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ॥ ३ ॥
अर्थेनैव विशेषो हि निराकारतया धियाम् ।
क्रिययैव विशेषो हि व्यवहारेषु कर्मणाम् ॥ ४ ॥
मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता ।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥ ५ ॥

साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ
भूतार्थानुभवे निविष्टनिखिलप्रस्ताविवस्तुक्रमः ।
लेशाद्दृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः
शङ्कोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः ॥ ६ ॥

---

## अथ पञ्चमः स्तबकः ।

कार्य्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः ।
वाक्यात् सङ्ख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥ १ ॥
न बाधोऽस्योपजीव्यत्वात् प्रतिबन्धो न दुर्बलः ।
सिद्ध्यसिद्ध्योर्विरोधो न, नासिद्धिरनिबन्धना ॥ २ ॥
तर्काभासतयाऽन्येषा, तर्काशुद्धिरदूषणम् ।
अनुकूलस्तु तर्कोऽत्र कार्यलोपो विभूषणम् ॥ ३ ॥
स्वातन्त्र्ये जडताहानिः, नादृष्टं दृष्टघातकम् ।
हेत्वभावे फलाभावः, विशेषस्तु विशेषवान् ॥ ४ ॥
कार्य्यत्वान्निरुपाधित्वमेव धृतिविनाशयोः ।
विच्छेदेन पदस्यापि प्रत्ययादेश्च पूर्ववत् ॥ ५ ॥
प्रवृत्तिः कृतिरेवात्र सा चेच्छातो यतश्च सा ।
तज्ज्ञानं, विषयस्तस्य विधिस्तज्ज्ञापकोऽथ वा ॥ ६ ॥
इष्टहानेरनिष्टाप्तेरप्रवृत्तेर्विराधतः ।
असत्त्वात् प्रत्ययत्यागात् कर्तृधर्मो न सङ्करात् ॥ ७ ॥
कृताकृतविभागेन कर्तृरूपव्यवस्थया ।
यत्न एव कृतिः, पूर्वा परस्मिन् सैव भावना ॥ ८ ॥
भावनैव हि यत्नात्मा सर्वाख्यातस्य गोचरः ।
तया विवरणध्रौव्यादाक्षेपानुपपत्तितः ॥ ९ ॥

आक्षेपलभ्ये संख्येये नाभिधानस्य कल्पना ।
संख्येयमात्रलाभे तु साकाङ्क्षेण व्यवस्थितिः ॥ १० ॥
अतिप्रसङ्गान्न फलं नापूर्वं तत्त्वहानितः ।
तदलाभान्न कार्यञ्च न क्रियाऽप्यप्रवृत्तितः ॥ ११ ॥
असत्त्वादप्रवृत्तेश्च नाभिधाऽपि गरीयसी ।
बाधकस्य समानत्वात् परिशेषोऽपि दुर्लभः ॥ १२ ॥
हेतुत्वादनुमानाच्च मध्यमादौ वियोगतः ।
अन्यत्र क्लृप्तसामर्थ्यान्निषेधानुपपत्तितः ॥ १३ ॥
विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः ।
अभिधेयोऽनुमेया तु कर्तुरिष्टाभ्युपायता ॥ १४ ॥
कृत्स्न एव च वेदोऽय परमेश्वरगोचरः ।
स्वार्थद्वारैव तात्पर्यं तस्य स्वर्गादिवद्विधौ ॥ १५ ॥
स्यामभूवं भविष्यामीत्यादौ संख्या प्रवक्तृगा ।
समाख्याऽपि च शाखानां नाद्यप्रवचनादृते ॥ १६ ॥
इत्येवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधासि हृदये ते शैलसाराशया ।
किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक त्वयैव कृपया ते तारणीया नराः ॥१७॥
अस्माकन्तु निसर्गसुन्दर चिराच्चेतो निमग्नं त्वयी-
त्यद्धाऽऽनन्दनिधौ तथापि तरलं नाद्यापि सन्तृप्यते ।
तन्नाथ त्वरितं विधेहि करुणां येन त्वदेकाग्रतां
याते चेतसि नाप्नुवाम शतशो याम्याः पुनर्यातना. ॥१८॥
इत्येष नीतिकुसुमाञ्जलिरुज्ज्वलश्री-
र्यद्वासयेदपि च दक्षिणवामकौ द्वौ ।
नो वा, ततः किममरेशगुरोर्गुरुस्तु
प्रीतोऽस्त्वनेन पदपीठसमर्पणेन ॥ १९ ॥

॥ इति कुसुमाञ्जलिकारिकाः ॥

# कुसुमाञ्जलिः ।



## प्रथमः स्तबकः

ईषदीषदनधीतविद्यया तातमातृमुदमाविवर्द्धयन् ।
क्षेपणाय भवकर्मजन्मनां कोऽपि गोपतनयो नमस्यते[१] ॥

इष्टदेवतासङ्कीर्त्तनं ब्रह्मप्रतिपादकस[२]च्छब्दप्रयोगात्मकञ्च मङ्गलं कुर्वन् ग्रन्थनामाह ।

सत्पक्षप्रसरः सतां परिमलप्रोद्बोधबद्धोत्सवो
विम्लानो न विमर्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः ।
ईशस्यैष निवेशितः पदयुगे भृङ्गायमाणं भ्रम-
च्चेतो मे रमयत्वविघ्नमनघोन्यायप्रसूनाञ्जलिः ॥ १ ॥

---

१ ईषत्-अव्यक्ता अनधीता स्वतःप्रवृत्ता या विद्या वाक् तया, विद्या-शब्दस्य ज्ञानार्थकत्वेऽपि प्रकृते ज्ञानजनकवाचि लक्षणा ज्ञेया। तातस्य मातुश्च प्रीतिं जनयन् भवः संसारः कर्माणि शुभाशुभरूपाणि जन्मनिकायविशिष्टाभि. देहेन्द्रियबुद्धिमनोवेदनाभिः संबन्ध., तेषां विनाशाय ( कोपि ) अनिर्वचनीय' श्रीकृष्णः नमस्क्रियते ।

२ सच्छब्दस्यब्रह्मप्रतिपादकत्व ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत इत्यादिस्मृते. ।

एषोऽनघो निर्दोषः न्याय.[1] समस्तरूपो[2]पपन्नलिङ्गप्रतिपादकं वाक्य स एव कुसुमाञ्जलिः मे मम चित्त रमयतु दुःखसामग्री[3]विहीनं करोतु । अनघत्व शब्ददोषरहितत्व विषयाशुद्धेः पूर्वंर्धनैव निरासाभिधानादिति प्रकाशः । अविघ्नं यथा स्यात्, ईशस्य पदयुगे पद्यतेऽनेनेतिव्युत्पत्त्या पदं प्रत्यायकं तद्युगं प्रमाणात्मकंरूपं तत्र, निवेशितः तद्विषयतया उत्पादितः । चेतः कीदृशं, भृङ्गायमाणं भृङ्गइव मकरन्दे दुःखविगमोपाये सतृष्ण, भ्रमत् दुःखविगमोपायमनुसन्दधत् । प्रसूनाञ्जलिसाम्यमाह सदित्यादि । सता समीचीनेन पक्षेणानुकूलेन रविकिरणादिना प्रसरो विकाशो यस्य स तथा, सतां पत्राणां दलाना विकाशो यत्र स तथेति वा । सतामनुपहतघ्राणाना परिमलस्य गन्धविशेषस्य प्रोद्बोधेन साक्षात्कारेण बद्ध उत्सव आनन्दो येन सः । विमर्दने करपुटविमर्दने न विम्लानः नान्यथाभूतसंस्थानः । अमृततुल्य रसं प्रस्यन्दते इति प्रस्यन्दः, एतादृशं माध्वीकं मधु, तस्य भूरुत्पत्तिस्थानम् ॥

न्यायपक्षे, सति प्रामाणिके पक्षतावच्छेदकविशिष्टे इति यावत्, पक्षे सिषाधयिषितसाध्यधर्मके धर्मिणि. प्रसरः प्रकर्षेण सरो ज्ञानं यस्मात्, एतेनाश्रयासिद्धिस्वरूपासिद्धिबाधनिरासः । सतां विवे-

---

१ नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेतिन्यायः ।

२ समस्तरूपाणि पक्षसत्व-सपक्षसत्व-विपक्षासत्व अबाधितत्वा-सत्प्रतिपक्षितत्वरूपाणि तैर्युक्त लिङ्गं गमकं तत्प्रतिपादक तद्बोधकं वाक्यम् ।

३ दुःखसामग्री दु.खप्रागभावादिघटिता तस्या एव तत्वज्ञाननाश्यत्वादिति ।

चक्रानां, परि सर्वतोभावेन, मल. सम्बन्धो व्याप्तिः, तस्या प्रोद्बोधेन प्रमया बद्ध उत्सव आनन्दो येन, एतेन व्यभिचार व्याप्यत्वासिद्धिविरोधाना निरासः। विमर्दने विरोधिप्रमाणचिन्तायां न विम्लानः न कार्यान्तमः, तेन सत्प्रतिपत्तराहित्यम् । अमृत मोक्षः रस इष्यमाणं "क्लृप्ति हितः[१] इति न्यायात्" प्रस्यन्द उत्पद्यमान, तेन मोक्षस्यासाध्यता निराकृता, तदेव माध्वीक तस्य भूरुत्पत्तिस्थानम् ॥ १ ॥

[२]नन्वीश्वरपद्दयुगनिवेशितस्य न्यायस्य मोक्षरूपफलसम्बन्धे मानाभावः तत्त्वज्ञानविषयात्मबोधकस्यात्मशब्दस्य ससारनिदानमिथ्याज्ञानविषयस्वात्ममात्रपरत्वात् तन्मननस्यैव मोक्षोपायत्वात्, इतिशङ्कायामाह ।

स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः ।
यदुपास्तिमसावत्र परमात्मा निरूप्यते[३] ॥ २ ॥

---

१ क्लृप्तिहितोभावोद्रव्यवत् प्रकाशते इति न्यायात ।

२ यद्विषयक साक्षात्कारोमोक्षहेतुः तद्विषयक मननं मोक्षजनकं साक्षात्कारश्च नेश्वरविषयकः मिथ्याज्ञानध्वंसद्वारा तस्य हेतुत्वात नचेश्वरगोचरं मिथ्याज्ञानं संसारहेतु येन ईश्वरगोचरमिथ्याज्ञानध्वंसद्वारा ईश्वरतत्त्वसाक्षात्कारो हेतुर्भवेत् कितु स्वात्मगोचरं मिथ्याज्ञान तत्साक्षात्कार एव मोक्षहेतुरिति पूर्वपक्षतात्पर्यम ।

३ मनीषिणः विद्वासः यस्योपास्तिमुपासना स्वर्गापवर्गयो स्वर्गतुल्ययो जीवन्मुक्तिपरममुक्त्यो मार्ग आमनन्तिकथयन्ति असौ परमात्मा निरूप्यते इति वाक्यार्थः उपास्तीत्यत्र बहुल वचनाद्यजभाव, यद्वा धातु निर्देश क्ति

स्वर्गापवर्गयोः स्वर्गतुल्ययोरपवर्गयोः जीवन्मुक्तिपरममुक्त्योः । ईश्वरमननञ्चादृष्टद्वारा स्वात्मसाक्षात्कारद्वारा वा मुक्तौ हेतुः, "तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय" ( श्वेता० उ० ) इति श्रुतिस्तत्कारणत्वे मानम् । स्वात्मसाक्षात्कारस्य मोक्षहेतुत्वे मानञ्च "यद्यात्मानं विजानीयादहमस्मीति पूरुषः । किमिच्छन् कस्य कामाय संसारमनुसंसरेत्" इति (बृहदा०) ॥ २ ॥

इह यद्यपि यं कमपि पुरुषार्थमर्थयमानाः, शुद्धबुद्धस्वभाव इत्यौपनिषदाः, आदिविद्वान् सिद्ध इति कापिलाः, क्लेशकर्मविपाकाशयैरपरामृष्टो निर्माणकायमधिष्ठाय सम्प्रदायप्रद्योतकोऽनुग्राहकश्चेति पातञ्जलाः, "लोकवेदविरुद्धैरपि निर्लेपः स्वतन्त्रश्चेति महापाशुपताः, शिव इति शैवाः, पुरुषोत्तम इति वैष्णवाः, पितामह इति पौराणिकाः, यज्ञपुरुष इति याज्ञिकाः, सर्वज्ञ इति सौगताः, निरावरण इति दिगम्बराः, उपास्यत्वेन देशित इति मीमांसकाः, लोकव्यवहारसिद्ध इति चार्वाकाः, यावदुक्तोपपन्न इति नैयायिकाः, किंबहुना, यं कारवोऽपि

---

पोथ प्रयोगः तस्यधातुरूपशब्दाभिधायकत्वेप्यर्थे द्विरेफपदवल्लक्षणा, अतएव "आज्य द्रव्यमनादेशेजुहोतिषु विधीयत" इत्यादिप्रयोगोपिसङ्गच्छते । यत्तदोर्नित्यसम्बन्ध इतिन्यायादुपक्रान्तस्य यच्छब्दस्य निराकाङ्क्षत्व प्रतिपत्तयेतच्छब्दसमानार्थतयाप्रतिपाद्यमाना इदमेतददः शब्दा अपि विधेया एवभवितुं युक्ता इत्यालङ्कारिकसमयात्तच्छब्देनानिर्देशेपिनात्र विधेयाविमर्शः, तथाच व्याकरण महाभाष्ये अथ शब्दानुशासनं, केषां शब्दानामिति ।

विश्वकर्मेत्युपासते, तस्मिन्नेव जातिगोत्रप्रवरचरणकुलधर्मादिवदासंसारं सुप्रसिद्धानुभवे भगवति भवे सन्देह एव कुतः, किं निरूपणीयम् । तथापि,

न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ॥ ३ ॥

श्रुतो हि भगवान् बहुशः श्रुतिस्मृतीतिहासपुराणादिषु, इदानीं मन्तव्यो भवति, "श्रोतव्यो मन्तव्यः" इति श्रुतेः "आगमेनानुमानेन ध्यानाभ्यासरसेन च । त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्" इति स्मृतेश्च ।

तदिह सङ्क्षेपतः[1] पञ्चतयी विप्रतिपत्तिः,[2] अलौकिकस्य परलोकसाधनस्याभावात्[3] १, अन्यथापि परलोकसाधनानुष्ठान-

---

१ सङ्क्षेपो नामावान्तरविप्रतिपत्तेरविवक्षा ।

२. विरुद्धा प्रतिपत्तिर्ज्ञानं, विप्रतिपत्तिः, विरुद्धकोटिद्वयोपस्थितिरिति-यावत् ।

३ चार्वाकमतेनेदं, अलौकिके तावदियं विप्रतिपत्तिः, लौकिकप्रत्यक्षाविषयगुणत्वसाक्षाद्व्याप्यजात्यधिकरणञ्च आत्मगुणो वर्तते न वा. इत्याकारिका, भावकोटिर्नैयायिकानां तेषां मते धर्मत्वाधर्मत्वादिकं चेदृशीजातिस्तदधिकरणत्वं चात्मगुणे, अभाव कोटिश्चार्वाकाणां तेषां मते गुरुत्वत्वादिकं च तादृशी जातिस्तदधिकरणत्वं चानात्मगुणे ।

परलोकमात्रे तु विप्रतिपत्तिरियं अहं सुखदुःखोभयजनकमच्छरीरातिरिक्तशरीरवान् न वेति, प्रसिद्धश्च तथा चैत्रः, कोटिव्यवस्था पूर्ववत् ।

साधने विप्रतिपत्तिः—कार्यप्रतियोगित्वंप्रतियोगित्वप्रागभावान्यप्रागभावाविषयप्रतीत्यविषयवृत्ति नवा, द्वयोरपि प्रागभावत्वत्वं प्रसिद्धः, पूर्ववदेव कोटिव्यवस्था ।

सम्भवात्[1] २, तदभावावेदकप्रमाणसद्भावात्[2] ३, सत्वेऽपि तस्याप्रमाणत्वात्[3] ४, तत्साधकप्रमाणाभावाच्चेति[4] ५ ।

शुद्धो द्वितीयरहितः, बुद्धो बोधस्वरूपः, आदौ सर्गादौ विद्वान् चिद्रूपः, सिद्धः अष्टविधैश्वर्यवान्, अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः[5], कर्म धर्माधर्महेतुर्यागहिंसादिः, विपाका जात्यायुर्भोगाः, [6]आशया धर्माधर्माः, निर्माणार्थं कायो निर्माणकायः, [7] संप्रदायो वेदः, प्रद्योतकः प्रकाशकः, वेदस्य

१ मीमांसकमतेनेदं, अदृष्टादिसत्वेपि वेदानाम् आप्तोक्तत्वेन प्रामाण्यावधारणं ततश्चाप्तो वेदकारः सिध्यतीति नास्ति, अन्यथापि वेदाना नित्यनिर्दुष्टतया स्वतःप्रामाण्यावधारणाद् वेदबोधितस्वर्गादिसाधनयागादौ प्रवृत्तेर्नेश्वरसिद्धिः ।

२ सौगतमतेनेदं, भवतु वेदानां पौरुषेयत्वा दाप्तोक्तत्व तथापि तत्र क्षित्यादेः कर्तृजन्यत्वे च प्रत्यक्षादिबाधाचे श्वरसिद्धिरित्यर्थः ।

३ दिगम्बरमतेनेद, सत्यपीश्वरो न प्रमाणं, प्रमाण पद हि भाव, करण, कर्तृव्युत्पत्या, प्रमातत्साधन तदाश्रयेषु वर्तते तथाचेश्वरः कर्तास्यात्त प्रमावांस्तत्करणेन्द्रियादिमांस्तत्समवायिकारणं च स्यात् नचायं तथेति विपर्ययानुमानात् ।

४ सांख्यमतेनेद, क्षितिवेदादेः कर्तृजन्यत्वं, कार्यत्वेनहेतुना हि साधनीय, सच हेतु शरीरजन्यत्वाद्युपाधिग्रस्तत्वान्न साधक इत्यर्थ ।

५ ' अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ।

' दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ।

' सुखानुशयीरागः । 'दुःखानुशयी द्वेषः ।

स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः, इत्यादियोगसूत्रोक्तलक्षणाः पञ्च क्लेशा एवात्र ज्ञेयाः ।

६ फल पर्यन्तमाशेरत इत्याशया ।

७ सम्प्रदीयते गुरुणा शिष्यायेति सम्प्रदायो वेदः ।

नित्यत्वात्, घटादौ कर्त्तव्येऽनुग्राहकः शिक्षयिता, शिवो निस्त्रैगुण्यः, पितामहो जनकस्यापि जनकः, इज्यते इति यज्ञः, सर्वज्ञः क्षणिकसर्वज्ञः, आवरणमविद्यारागद्वेषमोहाभिनिवेशाः' उपास्यत्वेन देशितो मन्त्रादिः[1], यावदुक्तेषु यदुपपन्नं तेनोपपन्नः, चरणं शाखा । [2]शाब्दसिद्धावप्यनुमित्सयाऽनुमितेर्न संशयासत्त्वं दोषाय । [3]"तुष्यतु दुर्जनः" इति न्यायेन संशयमाह तदिहेत्यादि ॥ ३ ॥

---

१ मीमांसकनये दैवतस्य मन्त्रात्मकत्वात ।

२ ननु श्रुत्यादिना निर्णीतत्वादीश्वरस्य पुनरनुमाने सिद्धसाधनं सिध्याभावरूपपक्षताविरहात्, सिद्धिमत्त्वदशायां संशयरूपपक्षताविरहाच्च नैवात्रानुमानकथापीति सर्वाशङ्कापरिहार पूर्वकमाह शाब्दसिद्धावपीत्यादिना, तथाच सामान्यतः श्रौतादीश्वर सिद्धि सत्वेऽपि विशेषतस्तावदीश्वरानुमितौ मुक्तिरूपफलसाधनताज्ञानेन तत्रेच्छासम्भवादिच्छायाः स्वविषयसिद्धिनिवर्त्यत्वनियमाच्च, सिषाधयिषाविरहसहकृतसाधकमानाभावात्मकपक्षतासत्वेन नानुमिति विरोधः । घनगर्जनेन मेघानुमानस्थले संशयमन्तरेणाप्यनुमित्युदयात्संशयस्य हेतुत्वमेव नास्ति ।

३ केचित्तु संशयस्यानुमितिमात्राहेतुत्वेऽपि जिज्ञासितार्थानुमितौ जिज्ञासाद्वारानुमितिहेतुत्वं संशयस्याहुः स्तत्तोषार्थमाह तुष्यत्विति, वयन्तु न्यायभाष्ये प्रमाणं प्रमेयं च विलङ्घ्य पूर्वं संशयस्य परीक्षणात् संशयस्य प्रधानतो न्यायाङ्गत्वं तथाच न्यायवार्तिके, किमर्थं क्रमभेदः ? परीक्ष्याङ्गत्वात्पूर्वं संशयः परीक्ष्यते तथाचोक्तं विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति, तथाच संशयपूर्वको विचारस्तर्कविषय एवेति सिद्धान्ताद् भाष्यवार्तिकमताविरोधेनैवात्र संशयावतरणं नतु तुष्यतुदुर्जनन्यायेनेति युक्तमाकलयाम ।

धर्माधर्मात्मकालौकिकपरलोकसाधने विप्रतिपन्नं प्रति तत्सा-धन सिद्धे च तस्मिन् [1]तदधिष्ठातृतया ईश्वरसिद्धिः, अचेत-नस्य कारणस्य सचेतनाधिष्ठानेनैव कार्यजनकत्वात् । तत्सा-धनायाह ।

सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः ।
प्रत्यात्मनियमाद्भुक्तेरस्ति हेतुरलौकिकः ॥ ४ ॥

अलौकिकोऽतीन्द्रियः परलोकहेतुरस्तीति प्रतिज्ञा । तत्र प्रथमतः कारणसामान्यसाधनायाह सापेक्षत्वादिति । सापेक्षत्वं कादाचित्कत्वं[2], तथा च कार्य्यं सहेतुकं कादाचित्कत्वात् भोजनजन्यतृप्तिवत् । 'ननु घटादिहेतोः सदातनत्वे घटादे-रपि सदातनत्वापत्तिः, तथा च तस्य कादाचित्कत्वं वाच्यम्-एवं तत्कारणपरम्पराऽपि कादाचित्की सहेतुका वाच्या' इत्यन-वस्थायामुक्तमनादित्वादिति[3] । बीजाङ्कुरवत् प्रामाणिकीयमन-वस्था न दोषायेत्यर्थः । ननु ब्रह्मैव कारणमस्तु, किं वा नाना-बुद्ध्यात्मिका प्रकृतिरेव तथाऽस्तु' इत्यत आह वैचित्र्यादिति । कार्य्यं विचित्रकारणवत् विचित्रकार्य्यत्वात् । 'ननु दृष्ट यागा-

१ अचेतनादृष्टं जन्यकार्ये चेतनरूपसहकारिकारणतये त्यर्थं अयं प्रयोग अदृष्टंबुद्धिमच्चेतनकारणाधिष्ठितं अचेतनत्वेसति कारणत्वात छेत्तृपुरुषाधिष्ठितवास्यादिवत् ।

२ उत्पत्तिगर्भः किञ्चित्समयसम्बन्धः कादाचित्कत्वं, विशिष्टोपादा-नेन उत्पत्तौ, प्रागभावे, ध्वंसे, वा न व्यभिचारः ।

३ अनादित्वं च स्वसजातीयध्वंसव्याप्यप्रागभावप्रतियोगित्वम् ।

ह्येव कारणमस्तु किमदृष्टेन इत्यत्राह, विश्ववृत्तित इति । विश्वेषां परलोकार्थिनां वृत्तितः यागादौ प्रवृत्तितः, स्वर्गादि फलकत्वज्ञानमेव यागादिप्रवृत्तिजनकं, यागादेश्च तज्जनकत्वं, तत्कालावस्थायिव्यापारं विना न सम्भवतीति अदृष्टसिद्धिः । "नन्वदृष्टं न भोगसमानाधिकरणं किन्तु भोग्यादिनिष्ठत्वेनैव भोगजनकं" इत्यत्राह, प्रत्यात्मनियमादिति । भुक्तेर्भोगस्य प्रतिनियतात्मवृत्तित्वात्, व्यधिकरणादृष्टस्य भोगजनकत्वेऽति-प्रसङ्गात् ॥ ४ ॥

[1]अकस्मादेव भवति, न किञ्चिदपेक्षं कार्यमिति, अतएव "अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात्[2]" इति पूर्वपक्षसूत्र ( न्यायसू० ४ । २२ ) तत्राह ।

हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च ।
स्वभाववर्णना नैवमवधेर्नियतत्वतः[3] ॥ ५ ॥

---

१ कादाचित्कमहेतुकं भावत्वात् गगनवदिति सत्प्रतिपक्षमाशङ्कते, अकस्मादिति ।

२ अनिमित्तत इति प्रथमान्तात्तसिल्, अनिमित्ता भावोत्पत्तिरित्यर्थः- अयमत्रानुमानप्रकार, घटाद्युत्पत्तिः, न कारणनियम्या, उत्पत्तित्वात् कण्ट, कतैक्ष्ण्याद्युत्पत्तिवत् ।

३ हेतुः कारणं, भूति भवनं, तयोर्न निषेध., स्व, कार्यं अनुपाख्य-मलीकं, तयोर्विधि कारणत्वविधानं, न, नैव स्वभाववर्णना, स्वभावस्य हेतुत्व, इति समुदितकारिकार्थः ।

(१)अकस्मादिति किं हेतुनिषेधपरं भवननिषेधपरं वा,(२)स्वातिरिक्तहेतुनिषेधपरं पारमार्थिकहेतुनिषेधपरं वा, अत्रोभयत्राहेतुकत्वमन्त्येऽलीकहेतुकत्वञ्च पर्य्यवस्यति,(३)स्वभावादित्यर्थपरं वा। स्व कार्य्यम्, अनुपाख्यमलीकम्। अवधेर्नियतत्वतः नियतावधिककार्य्यदर्शनात्, अनियतावधिकत्वे च कादाचित्कत्वव्याकोप इति भावः॥ ५॥

'नन्वनादिश्चेत् कार्य्यकारणप्रवाहः कादाचित्कत्वान्यथानुपपत्त्या कल्प्यः, तदा वन्हित्वावच्छिन्नस्य तृणादिव्यभिचारितया तृणाद्यकारणत्वे कादाचित्कत्वस्वभावव्याकोपः, कारणान्तरस्य च वक्तुमशक्यत्वात्,। इ च वन्ह्यनुकूलैकशक्तिमत्त्वेन कारणता, शक्तिश्च पदार्थान्तरं प्रतिव्यक्ति नाना अनित्येऽनित्या "नित्ये नित्यैव सा शक्तिरनित्ये भावहेतुजा" इति तत्सिद्धा-

---

१ अकस्मादित्यत्र किं शब्दो यदि हेतुमात्रपर तदा तस्य नञा सम्बन्धाद्धेत्वभावे भवनं लभ्यते, यदि तु भवनक्रियया नञासम्बन्धः तदा प्रसज्यप्रतिषेधे भवननिषेधोऽर्थ. 'अ मा नो ना प्रतिषेधवचना'इति कोशादसमस्तस्याशब्दस्य भवनान्वयोऽप्यत्रकल्पे ज्ञेयः, एतदुभयमाशङ्क्य पृच्छति अकस्मादितीति।

२ यदि च विशिष्ट एव नञोऽन्वयात् हेतुप्रयोज्यभवनाभावो लभ्यते तदा एक विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकत्वात् हेतुव्यतिरिक्ताद् भवनं लभ्यते, हेतुव्यतिरिक्त च कार्य स्वरूपमलीकञ्च तयाच स्वानुपाख्यविधिः, तदुभयमप्याशङ्क्य पृच्छति स्वातिरिक्तेत्यादिना।

३ अथाश्वकर्णादिवन्तराटिशब्दवदव्युत्पन्न एवायमकस्माच्छब्दः, अस्वभावपरो वा किं शब्दस्तदभाव एव नञा बोध्यत इति स्वभावादेव कार्यस्य कादाचित्कत्वमित्याशयेन पृच्छति, स्वभावादिति।

न्नात् । 'वह्न्यनुकूला तृणारणिमणिनिष्ठाशक्तिर्नित्या' इति तु मतान्तरम् । न्यायमतं तु तृणादिजन्यतावच्छेदकं वैजात्यमेव, विजातीयेष्वेकजातीयकार्य्यानुकूलशक्तिकल्पने धूमादिना वह्न्यनुमानं न स्यात्, न स्याच्च तृणफुत्कारसमवधानस्य निर्मन्थनारणिसमवधानस्य प्रतिफलितरविकिरणमणिसमवधानस्य च प्रतिनियमः, कारणतावच्छेदकावच्छिन्नस्यैव कारणतावच्छेदकान्तरावच्छिन्नसमवधाने कार्य्यजननस्य दृष्टत्वात्, फुत्कारमणिसम्बन्धादिनोऽपि वह्न्यापत्तेः[१] । यदि च तृणफुत्कारादिसम्बन्धादिषु वह्न्यनुकूलैका शक्तिः कल्प्यते तदा नैतत्समाधानं, परन्तु तार्णवह्न्यादिनिष्ठं वैजात्यं प्रत्यक्षसिद्धं दीपत्वादिवदिति[२] न पदार्थान्तरशक्तिकल्पनम् । अमुमर्थमाह,

प्रवाहो नादिमानेष न विजात्येकशक्तिमान् ।

तत्त्वे यत्नवता भाव्यमन्वयव्यतिरेकयोः ॥ ६ ॥

एष कार्य्यकारणप्रवाहः नादिमान् अनादिः, विजातीयेषु तृणादिषु एकशक्तिमान् न प्रवाहः, अन्वयव्यतिरेकयोस्तत्त्वे नियतत्वे निर्वाह्ये यत्नवता भाव्यं यत्नः करणीयः, वैजात्यं कल्पनीयमिति भावः, वह्निसामान्यं प्रति तु विजातीयोष्णस्पर्शवत्तेज एव कारणम् ॥ ६ ॥

---

१ तृणत्वादेः कारणतानवच्छेदकतया तदवच्छिन्नसहकारितायाः फुत्कारादेर्वक्तुमशक्यतया वह्न्यनुकूलशक्तिमत्त्वावच्छिन्नस्यैव सहकारितया फुत्कारसहकारेण मण्यादितोऽपि वह्न्युत्पत्त्यापत्तिरिति भावः ।

२ आलोकविशेषजनकताच्छेदकं यथा प्रत्यक्षसिद्धमित्यर्थः ।

(१)'ननु यथा एक एव दीपः आलोककारी वर्त्तिविकारकारी घटादिप्रकाशकारी च, तथा एकमेव ब्रह्म किं वा कार्य्यकारणयोरभेदात् प्रतिपुरुषं विभिन्नबुद्धेरभिन्ना प्रकृतिरेव हेतुरस्तु, तथा च नादृष्टाधिष्ठातृतयेश्वरसिद्धिः' इत्यत्राह ।

एकस्य न क्रमः क्वापि वैचित्र्यञ्च समस्य न ।
शक्तिभेदो न चाभिन्नः स्वभावो दुरतिक्रमः ॥ ९ ॥

एकस्य कारणस्य नियम्यो न कार्य्याणां क्रमः, समस्य एकजातीयकारणस्य प्रयोज्यञ्च न कार्य्याणां वैचित्र्यं वैजात्यं, तथा च क्रमिककार्य्यनिर्वाहकतया क्रमिककारणसिद्धिः, विजातीयकार्य्यजनकतया च विचित्रहेतुसिद्धिरित्यर्थः । 'शक्तिभेदादेव सजातीयादेकस्मात् कार्यवैजात्य' इति शङ्कां निराकुरुते शक्तिभेदो न चाभिन्न इति । चो हेतौ, न शक्तिभेदः अभिन्नो यतः, शक्तिशक्तिमतोरभेदात्, भेदे च तस्यैव कारणत्वस्वीकारे एकमात्रकारणत्वभङ्गप्रसङ्गो द्वैतापत्तिश्चेत्यर्थः । 'ननुस्वभावादेव एककारणस्य विचित्रकार्यनिर्वाहकत्वम्' इत्यत्राह स्वभावे दुरतिक्रम इति । एकस्मिन् कार्ये जनयितव्ये यः स्वभावः

---

१ ननु कार्याणामक्रमिकत्वे न क्रमिककारणसाधकं तथा कार्यवैचित्र्यमपि न विचित्रकारणत्वसाधकं, आलोक-वर्त्तिविकार-घटादि प्रकाशेषु विचित्रेषु चैकस्यैव दीपस्य हेतुत्वेन व्यभिचारादिति बाधकाभावेन सकलकार्येषु एकस्य ब्रह्मण एव हेतुत्वमथवैकजातीयायाः प्रकृतेरेव वास्तु, तदित्याशयेनाह नन्वित्यादिना ।

कार्यान्तरजननकाले तस्यानुवृत्तौ दहनस्याऽपि जलादित्वं स्यात्, स्वभावस्य दुरपह्नवत्वादित्यर्थः, प्रदीपस्थले तत्तत्कार्य-(१)सामग्रीभेदकल्पनादिति भावः ॥ ७ ॥

'ननु दण्डादिर्घटादौ हेतुरस्तु, न तु यागादिः स्वर्गादिहेतुः, इत्यत्राह ।

विफला विश्ववृत्तिर्नो न दुःखैकफलाऽपि वा ।
दृष्टलाभफला वापि विप्रलम्भोऽपि नेदृशः ॥ ८ ॥

विश्वेषां परलोकार्थिनां स्वर्गाद्यर्थं यागादौ प्रवृत्तिर्विफला न, न वा दुःखमात्रफलिका प्रवृत्तेरिष्टसाधनताधीसाध्यत्वात् । न च दृष्टलाभफला पूजाख्यातिधनादिफला, तन्निरपेक्षैरपि तदाचरणात् । 'केनचित् प्रतारकेण स्वर्गादिफलकतया यागादिकं प्रकल्प्य स्वयमनुष्ठाय धन्धितो लोकः प्रवर्तते' इत्यत्राह, विप्रलम्भोऽपि नेदृश इति । क एव लोकोत्तरो यः परप्रतारणार्थं नानाविधक्लेशहेतुकर्मभिरात्मानमवसादयेत्, तथा च यागादिप्रवृत्तिरेव स्वर्गादिफलकत्वे यागादेर्मानमिति ॥ ८ ॥

'ननु यागादिकं स्वर्गादिहेतुरस्तु, न तु तज्जन्यादृष्टं तथा, इत्यत्राह ।

चिरध्वस्तं फलायालं न कर्मातिशयं विना ।
सम्भोगो निर्विशेषाणां न भूतैः संस्कृतैरपि ॥ ९ ॥

---

१ वर्तिसंयोगादिघटितसामग्रीभेदकल्पनादित्यर्थः, अन्यथा आलोकादीनां यौगपद्यप्रसङ्गात् ।

चिरध्वस्तं यागादिकर्म अतिशय तत्फलानुकूलव्यापारं विना फलाय नालं न समर्थं, चिरध्वस्तकारणस्य व्यापारद्वारैव हेतुत्व, [1]यथा अनुभवस्य संस्कारद्वारकस्य स्मृतौ । [2]ननु भोग्य-निष्ठमदृष्ट कारणमस्तु' इति जिज्ञासायामाह, सम्भोग इति । निर्विशेषाणामदृष्टरूपविशेषगुणशून्यानाम् आत्मना सम्भोगः प्रत्यात्मनियतो भोगः, सस्कृतैरपि अदृष्टवत्तया स्वीकृतैरपि भूतैर्न स्यात, भूतानां शरीरादीना सर्वात्मसाधारण्यात्, तददृष्टाकृष्टैरेव शरीरेन्द्रियादिभिस्तद्भोगजननादित्यर्थः ॥ ९ ॥

[3]'ननु भोग्यादिनिष्ठ एव धर्मविशेषोऽतीन्द्रियः प्रतिनियत-भोगादिनियामकोऽस्तु, यथा दाहादिनियामको वह्न्यादिनिष्ठः शक्तिभेद., अन्यथा तादृशादेव करतलानलसयोगात् सति प्रति-

१ यागध्वसस्य व्यापारत्वे,ध्वसस्यनित्यत्वात्स्वर्गधारापत्तेः प्रतियोगिध्वंसयोरेकत्राजनकत्वनियमाद्यागस्य स्वर्गप्रतिबन्धकत्वापत्तेश्च यागजन्यादृष्टस्यैवव्यापारत्व कल्प्यते, अत्रायंप्रयोग चिरध्वस्तयागादिकं स्वजन्य व्यापारवत्वसम्बन्धेन फलजनक साक्षातसम्बन्धेन फलोत्पत्तिप्राक्क्षणावृत्तित्वेसति फलजनकत्वात, स्मृतिजनकानुभववत् ।

२ ननु यागकर्तृ स्वर्ग प्रति शरीरेन्द्रियस्रक्चन्दनादिविशेषाणां हेतुत्व नियमाय तेषु यागजन्यसस्कारविशेषो भोगकारणतावच्छेदकतया स्वीकार्यः तस्यैव स्वर्गजनकत्वसम्भवे आत्मनिष्ठादृष्टसृष्टि र्व्यर्थेत्याशङ्कते नन्विति ।

३ ननु वह्नौ दाहानुकूलशक्तिवत् भोगसाधनस्रगादिषु भोगजनकताव-च्छेदिका शक्ति स्वीकार्या, साच यागादिजन्यादृष्टरूपा तदतिरिक्तकल्पने गौरवात तच्चादृष्ट काले प्रथमतो जाते तत्तत्स्रगादिषु जातेषु तन्निष्ठतया भोगजनकतावच्छेदकमिति नादृष्टस्यात्मनिष्ठतेत्यभिप्रायेणाह ननु भोग्यादि निष्ठ एवेति ।

बन्धके दाहापत्तेः । न च 'मण्याद्यभाव एव कारणमस्तु, इति वाच्यं कारणत्वस्य भावत्वव्याप्तत्वात् किन्तु शक्तिनाशं करोतीति मण्यादिः प्रतिबन्धक उच्यते, तथा च शक्तिः स्वीकार्या इत्यत्राह ।

भावो यथा तथाऽभावः कारणं कार्यवन्मतः ।

प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः ॥ १० ॥

यथाऽन्वयव्यतिरेकादिना अभावो ध्वंसः कार्यः तथाऽभावः कारणमपि, कारणत्वं भावत्वव्याप्यमित्यस्याप्रयोजकत्वात् [१] । अकिञ्चित्करस्य प्रतिबन्धकत्वानुपपत्तिः' इत्यत्राह, प्रतिबन्ध- इति । विसामग्री कारणाभावः, स च प्रकृते मण्याद्यभावस्याभावो मण्यादिः, तत्समवधानहेतुः पुरुष एव प्रतिबन्धकः, स्वार्थे कप्रत्ययेन च मण्यादौ प्रतिबन्धकपदप्रयोग इति भावः । मीमांसकास्तु 'उत्तेजकाभावकूटविशिष्टमण्यभावत्वेन हेतुत्वे गौरवात् लाघवाच्छक्तिर्नित्या वन्ह्यादौ कल्प्यते, प्रतिबन्धके सति शक्तिकुण्ठनम् । यत्तु 'शक्तिः प्रथमतो वह्निकारणजन्या वह्निनिष्ठा, प्रतिबन्धकेन च तस्या विनाशे उत्तेजकेन पुनर्जननम् । न च शक्तेरनियतहेतुकत्वमितिवाच्यं शक्त्यनुकूलशक्तिमत्त्वेन कारणत्वात् इति, तन्न, वह्निनिष्ठनानाशक्तिकल्पनापेक्षया उत्तेजकाभावविशिष्टमण्यभावस्यैकस्यैव वरं हेतुत्वौचित्यात्, तथाचाकुण्ठितशक्तिरेव तत्र कारणतावच्छेदिका कल्प्यते' इत्याहुः ।

१ कारणत्वमभावव्याप्यमिति विपर्य्ययस्यापिवक्तुं शक्यत्वात् ।

नत्र(१), शक्तिकुण्ठने प्रतिबन्धकस्य हेतुत्वमुत्तेजकस्य कुण्ठितत्व-विनाशकत्वमित्याद्यनन्तशक्तिकल्पनापत्तेरिति(२) दिक् ॥ १० ॥

(३) 'ननु 'व्रीहीन् प्रोक्षति, व्रीहीनवहन्ति' इत्यत्र प्रोक्षण जन्यः कालान्तरभाव्यवघातजनको व्यापारो व्रीहिनिष्ठः कल्प्यते, 'प्रोक्षिता एव व्रीहयोऽवघाताय कल्प्यन्ते' इति वाक्यशेषात् । किञ्च यो यद्गतफलार्थितया क्रियते स तन्निष्ठफलजनकव्यापार-जनकः यागवत् । किञ्च व्रीह्यादीनामापरमाण्वन्तभङ्गे व्रीह्या

१ प्रतिबन्धकेन वह्निशक्तिनाशादुत्तेजकेन प्रतिबन्धकशक्तिनाशात्पुनर्वह्नौ शक्तिर्न स्यात्, पूर्वस्यानाशादन्यस्याहेतोरभावादित्ययमपि दोषोऽत्रकस्ये बोध्यः ।

२ शक्तेरपि भावत्वात्तदनुकूलशक्त्यन्तरानुसरणेऽनवस्थानं च ।

यद्यपि घटादिकार्यं प्रति तत्तत्कार्यानुकूलैकशक्तिमत्त्वेन कारणत्वे लाघवं दण्डत्वादीनां नानाकारणत्वकल्पने गौरवं प्रतिबन्धकसमवधान-कालीनकारणेषु शक्तिविरहादेव कार्यानुत्पादसम्भवे प्रतिबन्धकाभावस्य कारणत्वाकल्पनेन महालाघव मतो शक्तिकल्पनमेव न्याय्यं, न च दण्ड-चक्रादिषु सर्वत्रैकशक्तिमङ्गीकृत्यतद्रूपत्वेन कारणत्वे केवलदण्डादपि घटो त्पत्तिस्स्यात अशेषकारणतावच्छेदकावच्छिन्नस्य सत्वादितिवाच्य, शक्ते कारण समुदायपर्याप्तत्वोपगमेन पर्याप्तिसम्बन्धेन शक्तिमत्त्वेनैव कारणत्वाभ्युप-गमात्केवलदण्डसत्वदशायां कारणतावच्छेदकावच्छिन्नस्याभावात—तथापि दण्डादीनां दण्डत्वादिना कारणत्वाभावे दण्डत्वाद्यवच्छिन्नधर्मिकेष्टसाधन-त्वज्ञानासम्भवेन घटार्थिनोनियमेन दण्डत्वाद्यवच्छिन्नोपादाने प्रवृत्तिर्न स्या दिति दण्डत्वादिना घटकारणत्व मवश्यमभ्युपेयमितिसिद्धान्तानुसारीपन्था ।

३ माभूत्सहजशक्तिराधेयशक्तिस्तुस्यादेवेति मीमांसक' पुन शङ्कते नन्विति ।

द्विनियमानुपपत्तिः[१]। तत्र माघकर्षणादिना भूमिनिष्ठा कृषिजन्या शक्तिर्निर्वाच्या ।" अत्रोत्तरम् ।

संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः ।
स्वगुणाः परमाणूनां विशेषाः पाकजादयः ॥ ११ ॥

प्रोक्षणादिभिः संस्कारोऽदृष्ट पुनः पुंसि इष्टः स्वीकृतः, प्रतिव्रीहि नानाशक्तिकल्पनापेक्षया एकस्यैवादृष्टस्यात्मनिष्ठस्य प्रोक्षणादिजन्यावघातजनकस्य लाघवेन कल्पनात्[२], दृष्टद्वाराभावे सति विहितस्य कालान्तरभाविफलानुकूलस्य धर्मजनकत्वकल्पनाच्च। संस्कृतो व्रीहिरितिप्रत्ययबलाच्च तस्य स्वरूपसम्बन्धेनैव व्रीहिनिष्ठत्व कल्प्यते, एतेनाभिमन्त्रितपय.पल्लवादावपि तत्तत्फलानुकूलमदृष्टं पुरुषनिष्ठम्। व्रीहीनिति च शत्रून् प्रोक्षति हन्त्यादाविव प्रोक्षणादिजन्यजलसंयोगादिरूपपरसमवेतक्रियाजन्यफलशालितया कर्मता। 'यो यद्गतफलार्थितया क्रियते स तन्निष्ठफलजनकव्यापारजनकः, इति च शत्रुनिष्ठवधाद्यर्थक्रियमाणश्येनादौ स्वनिष्ठफलजनके व्यभिचारि। यवाद्युत्पत्तिनियमार्थमाह

---

१ परमाणावन्तोनाशोयेषां तानि द्व्यणुकानि अभिव्याप्यभङ्गेनाशे सतीत्यर्थ., तथाच प्रलयोत्तर पुन सृष्टौ परमाणुभेदकाभावात् कीदृशैः परमाणुभिर्यवाद्युत्पत्तिरितिनियमानुपपत्ति, शक्तिवादिनयेतु, व्रीह्यादिपरमाणुषु यवादिपरमाणुषु च पृथक् पृथक् शक्तिरिति सैव व्रीह्यादिनियामिकेतिभाव.।

२ व्रीहिगतत्वं वो न तावत्सकलव्रीहिनिष्ठ एक एव, एकव्रीहिनाशे तन्नाशापत्तेः न च यावदाश्रयनाशात्तन्नाशः लाघवादाश्रयनाशस्यैव तन्त्रत्वात्।

स्वगुणाः परमाणूनां पाकजादयो विशेषा विशेषकाः, तेन पाक-जरूपरसादिविशिष्टाः परमाणवस्तत्तत्कार्यमारभन्ते । चिकित्सा-स्थले तु धातुसाम्यमेव भेषजपानस्य रोगादिनाशे फले जनयितव्ये द्वारमिति भावः ॥ ११ ॥

(१) ननु यत्र पाकजो न विशेषस्तत्र वाय्वादौ कथमुद्भूतस्प-र्शादि, करकादौ च प्रतिरुद्धं द्रवत्वमिति, कथञ्च प्रतिमादौ प्रतिष्ठादेरुपयोगः, तथा च प्रतिष्ठाजन्या शक्तिश्चाण्डालादिस्पर्श-नाश्या पूज्यताप्रयोजिका स्वीकार्या, इत्यत्राह ।

निमित्तभेदसंसर्गादुद्भवानुद्भवादयः ।

देवताः सन्निधानेन प्रत्यभिज्ञानतोऽपि वा ॥ १२ ॥

निमित्तभेदः अदृष्टभेदः, देवताः प्रतिष्ठाविधिना सन्निधाने-नाहङ्कारममकारादिना आराधनीयतामासादयन्ति, प्रतिष्ठाविधि-ना देवतानां प्रतिमादौ अहङ्कारममकारौ, चाण्डालादिस्पर्शे च तादृशाभिमानाभावः । देवताचैतन्यविवादेऽपि यथार्थपूजितत्व-धीः प्रतिष्ठितत्वधीश्च चाण्डालादिस्पर्शाद्यभावविशिष्टा पूज्य-तानियामिका, तत्र चोपयोगिनी प्रतिष्ठा । वस्तुतस्तु प्रतिष्ठा-कालीनयावदस्पृश्यस्पर्शनादिसंसर्गाभावः प्रतिष्ठाध्वंसकालीनः

---

१ कुत्रचिद्वाय्वादौ उद्भूतस्पर्शादि, कुत्रचिन्न, कुत्रचिज्जले करकादौ द्रवत्वप्रतिरोधो न सर्वत्र इत्यादौ शक्तिरेव नियामिकेत्यवश्यं सा स्वीकार्या, एवं प्रतिमादौ प्रतिष्ठाविधिना पूज्यताप्रयोजिका शक्तिरेव वाच्येति मीमां-सकः पुनराशङ्कते नन्विति ।

पूज्यताप्रयोजकः 'प्रतिष्ठितं प्रपूजयेत्' इति तेन प्रतिष्ठाध्वस्यैव प्राप्तिरिति दिक् ॥ १२ ॥

'ननु तुलापरीक्षादौ परीक्षाविधिना शक्तिस्तुलादौ जन्यते, तथा नमनोन्नमनादिकं फलं जन्यते' इत्यत्राह ।

जयेतरनिमित्तस्य वृत्तिलाभाय केवलम् ।
परीक्ष्यसमवेतस्य परीक्षाविधयो मताः ॥ १३ ॥

जयस्तदितरः पराजयः, तन्निमित्तस्यादृष्टस्य परीक्षणीयपुरुषसमवेतस्य वृत्तिलाभाय फलानुकूलसहकारिलाभाय परीक्षाविधयो मताः स्वीकृताः । योऽहमनेन परीक्षाविधिना तुलामारूढः सोऽहं पापवान् निष्पापो वेति ज्ञानं सहकारि । यद्वा वृत्तिलाभाय जननाय, तथा च प्रतिज्ञानुरूपां शुद्धिमपेक्ष्य धर्मोऽशुद्धिमपेक्ष्याधर्मो जन्यते [१] । एतेन 'ब्रह्मवधाकरणादिना पुण्यस्याजननात् कथं तस्य सहकारि तादृशज्ञानं स्यात्, इत्यपि परास्तम् ॥ १३ ॥

[२] साङ्ख्यास्तु "पुरुषश्चैतन्याश्रयः अकारणं, अत एव कूटस्थो नित्यः । प्रकृतिश्चाचेतना परिणामिनी नित्या एका [३], प्रकृतेश्च

---

१ तथा च पापाभिशस्तो योऽहमनेन परीक्षाविधिना तुलामारूढः, सोऽहं निष्पाप इति प्रतिज्ञा परीक्षासमये अवश्यं कर्त्तव्या, चेत्सा प्रतिज्ञा सत्या तर्हि तत्सहकृतपरीक्षाविधिना धर्मो जायते, अन्यथा चेत्फलमपि विपरीतमेव, तादृशफलेनैवान्तिमं नमनोन्नमनादिकं जयः पराजयश्चेति यद्वेत्याटिकल्पहृदयम् ।

२· साङ्ख्यमतं प्रदर्श्य निरस्यति, साङ्ख्यास्त्विति ।

३· एकेति "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानामिति श्रुतेः" ।

प्रथमपरिणामो बुद्धिर्महत्तत्त्वं, तत्राष्टौ धर्माः ज्ञानाज्ञानैश्वर्य्या-नैश्वर्यवैराग्यावैराग्यधर्माधर्मरूपाः[१], बुद्धिसुखदुःखेच्छाद्वेषप्रयत्न-धर्माधर्माश्चेत्यष्टौ वा, भावनायास्तैरनङ्गीकारात् अनुभवस्यैव स्मृतिकाले सूक्ष्मतयाऽवस्थानात् । अचेतनायाः प्रकृतिकार्य्यायाः बुद्धेश्चैत[२]न्याभिमानान्यथानुपपत्त्या स्वाभाविकचैतन्यस्वरूपः पुरु-षः सिद्धः धर्मधर्मिणोरभेदात्[३] । तत्र प्रकृतेर्महान् महतोऽहङ्कारस्त-स्माद्रूपरसगन्धस्पर्शशब्दतन्मात्राणीति सप्त, चक्षुस्त्वक्घ्राण-रसनाश्रोत्रमनांसि वाक्पाणिपादपायूपस्थानि इन्द्रियाणि, तन्मात्रे. पञ्च महाभूतानि पृथिव्यप्तेजोवाय्वाकाशानि जायन्ते। तदुक्तम् 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः.' ( सा०का० ३ ) पञ्च महाभूतान्येकादशेन्द्रियाणि चेति षोडश । चैतन्यस्य नित्यस्य स्वाभाविकेष्टानिष्टविषयावच्छिन्नस्वाभाव्येऽनिर्मोक्षः स्यात्[४], प्रकृत्यधीनत्वेऽपि विषयावच्छेद्यत्वस्य प्रकृतेर्नित्यतया

१ ज्ञान प्रकृतिपुरुषविवेकेन शरीरात्मनोर्भेदज्ञानम्, अज्ञान तद्विरो-धि देहात्मनोरभेदज्ञानम, ऐश्वर्यं अणिमाद्यष्टविध , अनैश्वर्य तद्विरोधि धर्मविशेष , वैराग्य रागानिवर्तको विद्वेषः, अवैराग्य विषयप्रवर्तकरागविशेषः, धर्मः अभ्युदयहेतुशुभादृष्टम, अधर्मो दुरदृष्टम् ।

२ ननु तादृशपुरुषसत्वे किं प्रमाणमतआह, चैतन्येति–तथाच अप्र-सिद्धस्याभिमानासम्भवादवश्यं चैतन्यमंगीकार्यमिति भाव ।

३. नन पूर्वं चैतन्या श्रयद्दत्युक्त इदानीं चैतन्यस्वरूपकथनं कथं सगच्छते तत्राह, धर्मधर्मिणोरभेदादिति ।

४. अनिर्मोक्षस्यादिति, तथाच चैतन्यस्य नित्यतया सर्वदैव चैतन्यात्मक-पुरुषस्य विषयसम्बन्धत्वे मोक्षो न भवेत् विषयसम्बन्धध्वंसस्यैवमोक्षत्वा दितिभावः ।

तथैवानिर्मोक्षप्रसङ्गः, घटादेरनित्यस्यापि स्वाभाविकचैतन्यावच्छिन्नत्वे दृष्टादृष्टविभागानुपपत्तिश्च, इन्द्रियमात्रापेक्षा यदि विषयचैतन्यावच्छेदस्तत्रापि व्यासङ्गानुपपत्तिः, अतो मनः स्वीकार्यं यत्सम्बन्धेन इन्द्रियस्य विषयीयचैतन्यावच्छेदनियामकत्वम् । स्वप्नदशायां व्याघ्रत्वाभिमानिनो न नरोऽहमित्यभिमानः, अतस्तन्नियमाय नियतविषयाभिमानव्यापारकोऽहङ्कारोऽपि स्वीकार्यः । [१]जाग्रत्स्वप्नसुषुप्तिषु श्वासप्रश्वासदर्शनात् प्रव्यापारं यदनुवर्त्तते तद्बुद्धितत्त्वं प्रागुक्तभावाष्टकयोगि स्वीकार्यम् । [२]तस्य ज्ञानरूपपरिणामेन सम्बद्धो विषयः पुरुषस्य स्वरूपतिरोधायकः, एवञ्च बुद्धितत्त्वनाशादेव विषयावच्छेदाभावात् पुंसो मोक्षः । भेदाग्रहाच्च चेतनोऽहं करोमीत्यभिमानः । तदुक्तं,

'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते' ॥

( गी० ) इति ।

---

१ बुद्धितत्व माधयति, जाग्रदिति, तथाच जाग्रदाद्यवस्थावैलक्षण्येऽपि अविलक्षणश्वासादिकार्यदर्शनादेकजातीयकार्ये एकजातीयकारणस्यावश्य मभ्युपेयत्वेन बुद्धितत्व मवश्यमंगीकार्यम्, अन्यथा सुषुप्तिदशायामहङ्कारपर्यन्तं व्यापाराभाव त्तैस्तत्कार्यानुपपत्तिरिति भाव ।

२ तस्यज्ञानरूपपरिणामेनेति, बुद्धितत्वसत्त्वे इन्द्रियप्रणालिकया तत्परिणामेन ज्ञानेन सम्बद्धो घटादि स्वाकारज्ञानपरिणामिबद्ध्यगृहीतसंसर्गकत्वसम्बन्धेन पुरुषनिष्ठ तत्स्वरूपतिरोधानेन पुरुषस्य संसारसम्पादकः, बुद्धितत्वनाशे तु तत्परिणामाभावात विषयावच्छेदकासत्वेन कैवल्याप्रधानरूपोमोक्ष, दुःखसम्बन्ध तद्ध्वंसरूप संसारमोक्षौ तु न पुंसो किन्तु बुद्धेरिति भाव. ।

सा च बुद्धिरंशत्रयवती, पुरुषोपरागः विषयोपरागः व्यापारावेशश्चेति, ममेदं कर्त्तव्यमित्यत्र ममेति चेतनोपरागः बुद्धिचेतनयोर्भेदाग्रहात् अतात्त्विकः, इदमिति विषयोपरागः तदुभयायतो व्यापारावेशः । बुद्धावारोपितचैतन्यस्य विषयेण सम्बन्धः ज्ञानं, ज्ञानेन सम्बन्धश्चेतनोऽहं करोमीत्युपलब्धिः'' इत्याहुः । अत्राह,

कर्तृधर्मा नियन्तारश्चेतिता च स एव नः ।

अन्यथाऽनपवर्गः स्यादसंसारोऽथ वा ध्रुवः ॥ १४ ॥

कृतिसमानाधिकरणास्तावद्धर्माधर्मद्वेषेच्छाः भोगस्य कृतिसामानाधिकरण्यात्, एवं चेतिता चेतनः स एव कृतिमानेव नोऽस्माकं मतः चेतनोऽहं करोमीति प्रत्ययबलात् । दूषणान्तरमाह, अन्यथेति । यदि बुद्धिर्नित्या तदा बुद्ध्युपहितात्मनः सर्वदावस्थानात् अनिर्मोक्षः स्यात्, यद्यनित्या तदोत्पत्ता वाच्या अनित्यभावस्यानुत्पत्त्यभावात् तथा च तदुत्पत्तेः प्राक् तदाश्रितधर्मादेरप्यभावेन, बुद्धितत्त्वस्यानुत्पत्तौ नियतशरीरेन्द्रियादिकार्यस्यानुत्पत्तौ असंसारः स्यादित्यर्थः ॥ १४ ॥

(१) चार्वाकस्तु 'भवतु चेतनधर्मोऽदृष्टं चेतनश्च न नित्यविभुः किन्तु (२) कायाकारपरिणतभूतविशेषः गौरोऽहं जानामीति प्रतीत्या रूपवत्त्वसिद्धेः' इत्यत्राह,

---

१ देहात्मवादिनश्चार्वाकस्य मतमुत्थाप्य निरस्यति चार्वाकस्त्विति ।

२ ननु भूतत्वाविशेषाद्घटादेरपि चैतन्यवत्त्वं स्यादित्यत आह कायाकारेति ।

नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात् ।
वासनासङ्क्रमो नास्ति न च गत्यन्तरं स्थिरे ॥ १५ ॥

शरीरस्य चैतन्ये बाल्यदशायामनुभूतस्य यौवने स्मरणं न स्यात्, चैत्रदृष्टस्य मैत्रेणास्मरणमिव । न च बाल्ययौवनयोरेकं भूतं शरीरम्, अपक्रमात् पूर्वशरीरविनाशात् परिमाणभेदेन द्रव्य-भेदात् पूर्वपरिमाणनाशस्याऽऽश्रयनाशहेतुकत्वात् । न च कार-णेनानुभूतस्य कार्येण स्मरणं स्यादिति वाच्यं वासनासंक्रमाभा-वात्, अन्यथा मात्राऽनुभूतस्य गर्भस्थेन [१] स्मरणापत्तेः । 'ननूपादानवासनाया उपादेये सङ्क्रमः स्यात्' इत्यत्राह, न च गत्यन्तरं स्थिर इति । स्थिरे स्थिरपक्षे पुञ्जात् पुञ्जान्तरोत्पत्तेर-भावात् करादि शरीरस्योपादानं वाच्यं, तथा च विच्छिन्न करादौ तदनुभूतस्य स्मरणं न स्यात्, खण्डशरीरे विच्छिन्नकरा-देरनुपादानत्वात् । न च परमाणूनां चैतन्यं तेषाञ्च स्थिरत्वात् स्मरणं स्यादिति वाच्यं, तथा सति स्मरणस्यातीन्द्रियत्वप्रस-ङ्गात्, तन्निष्ठरूपादिवत् करपरमाण्वनुभूतस्य विच्छिन्नकरपर-माणुसन्निधावस्मरणप्रसङ्गाच्च [२] ॥ १५ ॥

[३] 'नन्वस्तु क्षणभङ्गः तथा च पूर्वपूर्वपरमाणुपुञ्जेनोपादेयो-त्तरपरमाणुपुञ्ज इति न स्मरणानुपपत्तिः' इत्यत्राह,

---

१. भ्रूणेनेति शेषः ।

२ तथा च शरीरं न चेतनं भूतत्वात् घटवदित्यनुमानमेव विपक्षबा-धकमिति भाव. ।

३, क्षणभङ्गवादिबौद्धमतमुत्थाप्यनिरस्यति—नन्वस्त्वित्यादिना, क्षण

न वैजात्यं विना तत् स्यात् न तस्मिन्ननुमा भवेत् ।
विना तेन न तत्सिद्धिर्नाध्यक्षं निश्चयं विना ॥ १६ ॥

वैजात्य (१) कुर्वद्रूपत्व विना न तत् क्षणिकत्वं स्यात् सिध्यतीत्यर्थः । (२)स्थिर एव बीजादौ सहकारिलाभालाभाभ्यामेव कार्यजन्माजन्मनोरुपपत्तेः बीजत्वादिनैवाङ्कुरादिजनकतोपपत्तेः, बीजव्यक्तिभेदाभावे कुतः क्षणिकत्व स्यात् । तस्मिन् जातिविशेषेच ऐन्द्रियकवृत्तावतीन्द्रियत्वेनाभ्युपगम्यमाने सत्यनुमान न स्यात् (३ धूमकुर्वद्रूपवह्नित्वादिनैव वह्न्यादेर्हेतुतया विलक्षणस्वकार्यजनकत्वेन सम्भावितस्य विजातीयधूमस्यैव वह्निजन्यत्वसम्भावनाया धूमसामान्यहेतुत्वानिर्णयात्, तथा च कार्यकारणभावरूपविप-

---

भङ्गभावमात्रस्य स्वोत्पत्त्यव्यवहितोत्तरकालवृत्तिध्वंसप्रतियोगित्व यत्तत तत्क्षणिक इति बौद्धसिद्धान्तात्, एतन्मते परमाणुपुञ्जातिरिक्तावयवी न सम्भवति, पूर्वपरमाणुपुञ्जाना विनाशाटत पुञ्जात्पुञ्जान्तरोत्पत्तिरित्ययमेव तेषांसिद्धान्तः, तथा च पूर्वोत्तरशरीरयोरुपादानोपादेयभावेन वासनासङ्क्रमसम्भवात् न प्रागुक्तस्मरणानुपपत्ति ।

१ अङ्कुरजनकतावच्छेदक जातिविशेषः ।

२ अङ्कुरादीन् प्रति बीजाना बीजत्वेन कारणत्वे कुशूलस्थबीजादप्यङ्कुरोत्पत्त्यापत्तिः, अतोबीजानामङ्कुरकारणतावच्छेदकं कुर्वद्रूपत्व, तत्स्वीकारेपि यदि बीजाना स्थिरत्वे पुनस्तद्दोषतादवस्थ्य मत क्षणिकत्वे, तथा चाय प्रयोग बीजादयः क्षणिकाः कुर्वद्रूपत्वात्, एतदेवनिरस्यतिस्थिरएवेत्यादिना ।

३ उपस्थितं कारणगतरूप परित्यज्यानुपलभ्यमानरूपान्तरेण कारणत्वे कार्यप्युपस्थितरूपमपहायानुपलभ्यमानरूपान्तरेण कार्यत्वशङ्कयाकार्यकारणभावग्रहमूलतर्काधीनव्याप्तिनिश्चयो न सम्भवतीति फलितार्थमाह—धूमकुर्वद्रूपेत्यादिना ।

सबाधकतर्काधीनव्याप्तिनिर्णयस्यासम्भवेनानुमानमात्रोच्छेदप्रसङ्ग इति । तेनानुमानेनविना च क्षणिकत्वस्यासिद्धिः, तस्यानुमानैकगम्यत्वात् । न च तत्र प्रत्यक्षमेवमानमिति वाच्यं निर्विकल्पकस्यैव तन्मते विषयजन्यतया प्रामाण्य (१), तस्य च सविकल्पकोन्नेयतया 'क्षणिकमिति सविकल्पकस्यासिद्धावनिर्वाहः । किञ्चाङ्कुरकुर्वद्रूपत्वं न जातिः शालित्वादिना सङ्करात्, शालित्वमपहाय यवे तस्य सत्त्वात्, शालित्वस्यापि कुशूलस्थे शालौ तदपहाय सत्त्वात्, कुर्वद्रूपे शालौ तूभयोः समावेशादिति । अत एव रजतत्वादिव्याप्यं नानैव घटत्वं, विजातीयसंस्थानवदवयवकत्वरूपमुपाधिमादाय घट इत्यनुगतधीरिति ॥ १६ ॥

(२) नन्वस्तु क्षणिकत्वे सन्देहः, न च प्रत्यभिज्ञाबलेन स्थैर्यसिद्धौ कथं स इतिवाच्यं स एवायं घट इत्यत्र सन्देहसत्त्वात्, अत्राह ।

(३) स्थैर्यदृष्ट्योर्न सन्देहो न प्रामाण्ये विरोधतः ।
एकतानिर्णयो येन क्षणे तेन स्थिरे मतः ॥ १७ ॥

---

१ बौद्धनये विषयजन्यं प्रत्यक्षं प्रमाणं तच्च निर्विकल्पकमेव, घटादेः क्षणिकतया घटाद्युत्पत्तितृतीयक्षणजातस्य घटादिसविकल्पकस्य घटादि विषयजन्यत्वं न सम्भवति कार्यनियतपूर्ववर्तिन एव कारणत्वात् ।

२ क्षणिकत्वसन्देहेऽपि चार्वाकाभिलषितसिद्धिरिति शङ्कते, नन्विति ।

३ अत्र, सन्देह', स्थैर्ये, प्रत्यभिज्ञायां, प्रामाण्यमात्रे प्रत्यभिज्ञानप्रामाण्ये वा, नाद्य इत्याह मूले स्थैर्येति, तत्र हेतुमाहटीकायां तस्येति ।

स्थैर्ये न सन्देहस्तस्य प्रत्यभिज्ञया विषयीकरणात्, न च प्रत्यभिज्ञानरूपे, तस्यापि तदनुव्यवसायेन निर्णयात्, प्रामाण्य-मात्रेऽपि न सन्देहः विरोधात् सन्देहज्ञानस्य प्रामाण्यसन्देहे सन्देहस्याप्यसिद्धेः, प्रामाण्यस्यासिद्धौ प्रामाण्यसंशयस्याप्यभावः कोट्यनिर्णयात् । 'ननु प्रत्यभिज्ञायाः प्रामाण्ये संशयः लूनपुन-र्जातकेशादौ त एवामी केशा इत्यादेर्भ्रमत्वदर्शनात्' तत्राह एकतेति । येन प्रमाणेन विरुद्धधर्मसंसर्गविरहेण, क्षणिके घटे यदि तस्मिन्नेव क्षणे न नानात्वं किन्त्वभेदः, तदा स्थिरे स्थिर-पदेऽपि नानाक्षणवर्तित्वेऽपि घटस्य न नानात्वं किन्त्वेकत्वम्, एकस्य ज्ञानस्य नानाविषयसम्बन्धवत् एकस्य नानाकालसम्ब-न्धेऽपि अविरोधात्, [1] तत्तत्कारणक्रमाधीनत्वात् तत्तत्काल-सम्बन्धस्य ॥ १७ ॥

तदेव परलोकसाधनमागतम् [2] । तत्रेदं शङ्कते 'कारणत्वं स्वाभाविकमौपाधिकं वा, आद्ये नीलस्य सर्वान् प्रति नीलत्ववत् कारणस्य सर्वान् प्रत्यविशेषात् कारणत्वमपि स्यात् [3], द्वितीये उपाधेरपि स्वाभाविकत्वे तद्दोषतादवस्थ्यात्, औपाधिकत्वेऽन-

---

१ नन्वेकज्ञानस्य युगपन्नानाविषयसम्बन्धवत् एकस्य युगपन्नानाकाल-सम्बन्धः स्यात् इत्यत आह, तत्तत्कारणक्रमेति ।

२ स्वर्गादिसाधनमदृष्टमित्यर्थः ।

३ नहि नीलं कश्चित्प्रत्यनीलं भवति, तथा यत् कारणं तत्सर्वान् प्रति कारणं स्यात् ।

वम्या । किञ्च कारणत्वस्य स्वाभाविकत्वे उत्पत्तेरारभ्य कार्यं स्यात् [१] तत्राह ।

हेतुशक्तिमनादृत्य नीलाद्यपि न वस्तु सत् ।
तद्युक्तं तच्च तच्छक्तमिति साधारणं न किम् ॥ १८ ॥

हेतुशक्तिं कारणत्वम्, अनादृत्य अनिश्चित्य, नीलाद्यपि न वस्तुसत् न प्रामाणिकं, तथा च 'यत् पारमार्थिकं तत् साधारणं यथा नीलादि, कारणत्वञ्च यदि न साधारणम् अतो न परमार्थसत्' इत्यपि न स्यात् दृष्टान्तस्यानित्यस्य नीलस्य कारणत्वस्वीकारेण सर्वत्राभावात् नित्यस्य नीलादेः प्रमाणागोचरत्वात् । किञ्चेत्याद्युक्तं दूषयति तद्युक्तमिति । तद्युक्तं, सहकारियुक्तं तत् कारणं, तच्च कार्ये, शक्तमिति नोत्पत्तेरारभ्य कारणत्वम्[२] । कारणत्वस्य साधारण्ये च इष्टापत्तिमाह, इति साधारणं न किमिति । नीलादेरपि सर्वसाधारण्यं यत् सर्वैर्नीलत्वादिना व्यवह्रियमाणत्वं, तादृशञ्च साधारण्यं सहकारियुक्तस्य जनकत्वमित्यस्याऽपि, तथा व्यवहारस्य सर्वसिद्धत्वात् ॥ १८ ॥

[३] 'नन्वात्मनिष्ठमदृष्टं नात्मजन्यं, नित्यविभोस्तस्य कालतो

---

१ स्थिरस्य एकस्वभावत्वनियमात, बीजस्य बीजत्वमिवाङ्कुरकारित्वमप्युत्पत्तित एव स्यादित्यर्थः ।

२ नियतकार्यप्रतियोगिककारणत्वमेव स्वभाव इत्यर्थः ।

३ स्थैर्यसिद्धावपि नित्यविभोर्नकारणत्वमुपपद्यत इति शङ्कते, नन्विति नित्यत्वेन न कालतो व्यतिरेकः, विभुत्वेन न देशतो व्यतिरेक इत्यर्थः ।

देशतश्च व्यतिरेकाभावात् व्यतिरेकसहकृतान्वयस्यैव कारणताग्राहकत्वात, तद्व्यतिरेकप्रयोजकव्यतिरेकप्रतियोगित्वस्यैव कारणतात्मकत्वाच्च, तथाच समवायिकारणाभावे असमवायिकारणनिमित्ताभ्यामपि न कार्यं जननीय तत्सन्यासत्ताभ्यामेव ताभ्या जननादित्यदृष्टस्य नित्यत्वापत्तिः, तथा च न प्रतिनियतात्मदेशकालीनभोगजनकत्व कल्प्येत' इत्यत्राह ।

पूर्वभावो हि हेतुत्व मीयते येन केनचित् ।
व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा न हि ॥ १६ ॥

व्यतिरेकगर्भं न कारणत्व किन्त्वनन्यथासिद्धनियतपूर्वभावः । हि हेतौ, यतो ग्राहको न व्यतिरेकः धर्मिग्राहकमानेनापि तस्य प्रमापणात्, [१] इत्यतो मीयते येन केनचित् व्यापकस्य नित्यस्यात्मनः येन केनचित् प्रमीयते, अन्यथा धर्मिधीरेव न स्यात्, तथा च धर्मिग्राहकप्रमाणसिद्ध तस्य हेतुत्वं, घटादिक प्रति कपालादेरन्वयव्यतिरेकदर्शनात् समवेतकार्यं प्रति द्रव्यस्य द्रव्यत्वेन कारणत्वस्य कल्पनात् पृथिव्यादिबाधे परिशेषेण ज्ञानेच्छादौ पृथिव्यादिभिन्नसमवायिनः सिद्धिः ।' [२] वस्तुतस्तु समवायिकारणताघटकोऽन्योन्याभावः, 'यत्र कपाल तत्र घटवदितिवत् यो न आत्मा न तत्र ज्ञानादि' इति धीसम्भवात् । एवं

१ बुद्ध्यादिभि. कार्यैस्समवायिकारणतयाऽऽत्मावगम्यत इति धर्मिग्राहकमानादेव तस्य कारणत्वग्रहः ।

२ कारणत्वस्य व्यतिरेकगर्भत्वेपि नात्मन कारणत्वव्याघातइत्याह, वस्तुतस्त्विति ।

यो न कालस्तत्र सम्बन्धविशेषेण न घट इति निमित्तकारणस्याऽधिकरणीभूतस्य कारणताऽप्यन्योन्याभावरूपव्यतिरेकेण ग्राह्या । एवञ्च मायाप्रकृत्यविद्यादिपदमप्येतत्परमिति न 'मायिकं जगत्, इत्यादिश्रुतिविरोधः, तथा चादृष्टाधिष्ठातृतया ईश्वरसिद्धिः ॥ १९ ॥

स्तबकार्थसंग्राहकश्लोकमाह ।

इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो
मूलत्वात् प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता ।
देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः
साक्षात् साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम ॥२०॥

इति प्रथमः स्तबकः ।

इति स्तबकसमाप्तौ, यस्येशस्य सहकारिशक्तिः सहकारिरूपा शक्तिः कारणम्, एषा सहकारिरूपा माया, असमत्व सर्वकार्यापेक्षणीयत्वात्, दुर्ज्ञेयत्वात् सादृश्यान्मायापदेऽदृष्टे लक्षणा (१), मूलत्वात् प्रकृतिः सैव, तत्त्वज्ञानप्रतिबध्यत्वात् सैवाविद्या, उदिता उक्ता, असौ देवो मम मनसि स्वविषयां साक्षादभिरतिं साक्षात्कारिज्ञानं बध्नातु जनयतु साक्षितया साक्षीभूय, निर्णायकतया साक्षित्वं, शान्तः रागादिगुणशून्यः प्रपञ्चस्य मिथ्या-

१ न च लक्षणाया शक्तिमूलकत्वान्मायापदस्य शक्तिविरहेण कथं मायापदस्यादृष्टे लक्षणेति वाच्यं, दोषविशेषमुत्पाद्य भ्रमजनकात्मनिष्ठव्यापारविशेषे मायापदस्य शक्तत्वात् ।

ज्ञानादेः कल्लोलः मिथ्याज्ञानपरम्परा, तस्याः कोलाहलः किंवदन्ती सा विरता यस्मादिति ॥ २० ॥

इति श्रीहरिदासभट्टाचार्य्यविरचितकुसुमाञ्जलिकारिका-प्रथमस्तबकव्याख्यानम् ॥

---

## द्वितीयः स्तबकः ।



अन्यथाऽपि परलोकसाधनानुष्ठानसम्भवादिति द्वितीयविप्रतिपत्तिः । 'अन्यथा ईश्वरं विनाऽपि परलोकसाधनयागाद्यनुष्ठानं सम्भवति यागादेः स्वर्गसाधनत्वस्य वेदगम्यत्वात्, नित्यनिर्दोषतया च[1] वेदस्य प्रामाण्य, [2]महाजनपरिग्रहाच्च प्रामाण्यस्य ग्रह इति वेदकारणतया नेश्वरसिद्धिः, [3]योगर्द्धिसम्पादितसार्वज्ञ्यकपिलादिपूर्वक एव वा वेदोऽस्तु' इत्यत्राह ।

---

१ निर्दोषत्वच भ्रमप्रमादाद्यन्यतमदोषवत्पुरुषाप्रणीतत्वं, तथाचान्यत्र वाक्ये वक्तृदोषेणाऽप्रामाण्यशङ्कासम्भवेऽपि नित्यत्वादवक्तृके वेदे तादृशशङ्कासम्भावना नास्तीति भाव ।

२ ननु वर्णानामनित्यत्वेन तत्समुदायस्य वेदस्य सुतरामनित्यत्वं ततश्च कथं नित्यत्वेन प्रामाण्यग्रह इत्यत आह, महाजनपरिग्रहाच्चेति, कर्तृजन्यत्वेपि शिष्टजनपरिग्रहात्प्रामाण्यं निश्चित्य यागादौ प्रवृत्तिर्भविष्यतीत्यर्थ ।

३ नन्वेव वेदाना कर्तृजन्यत्वे भ्रान्तेः पुरुषधर्मत्वात्कथं भ्रान्तिमत्कर्तृकवेदानां प्रामाण्यनिश्चय, इत्यत आह - योगर्द्धिसम्पादितेति, तथा च सर्वज्ञाः कपिलादय एव वेदकारा अदृष्टाधिष्ठातारश्चेति न नित्यसर्वज्ञेश्वरसिद्धिरिति भाव. ।

(१) प्रमायाः परतन्त्रत्वात् सर्गप्रलयसम्भवात् (२) ।
तदन्यस्मिन्नविश्वासान्न विधान्तरसम्भवः (३) ॥ १ ॥

शाब्दी प्रमा वक्तृयथार्थवाक्यार्थधीरूपगुणजन्या इति गुणाश्रयतया ईश्वरसिद्धिः । 'ननु सकर्तृकेऽस्तु यथार्थवाक्यार्थधीर्गुणः, अकर्तृके च वेदे निर्दोषत्वमेव प्रामाण्यप्रयोजकमस्तु, महाजनपरिग्रहेण च प्रामाण्यग्रहः, इत्यत आह सर्गप्रलयसम्भवादिति । प्रलयोत्तरं पूर्ववेदनाशादुत्तरवेदस्य कथं प्रामाण्यं, महाजनपरि-

---

१ सामान्यतः प्रमामात्रे गुणजन्यत्वसिद्धौ शब्दप्रमायामपि तज्जन्यत्वसिद्धिर्भविष्यतीत्याशयेनाह, प्रमाया इति, प्रमायाः जन्यप्रमाया इत्यर्थः, परतन्त्रत्वात् पराधीनत्वादित्यर्थः, तथाच वेदजन्या शाब्दीप्रमा गुणजन्या प्रमात्वात् चाक्षुषप्रमावत्, इतिसामान्यतोऽनुमानेन इतरबाधसहकारात् वक्तृयथार्थज्ञानरूपगुणजन्यत्वे सिद्धे, वेदजन्यशब्दबोधजनकयथार्थवाक्यार्थज्ञानं आत्मसमवेतं ज्ञानत्वादित्यनुमानेनेतरबाधसहकृतादीश्वरसिद्धिरिति भावः । ननु जन्यप्रमामात्रस्य गुणजन्यत्वे शुकादिकवाक्यं भ्रान्तप्रतारकवाक्यं च सवादि कथं प्रमाणं गुणजन्यत्वाभावात्, धूमभ्रमाद् वह्निमत्येव वह्न्यनुमितिर्वा कथं प्रमा यथार्थलिङ्गज्ञानजन्यत्वाभावात्, न च वह्न्यन्तरमेव तद्विषयं, प्रत्यभिज्ञानात्, गोत्वादौ व्यभिचारेण तदभावाच्च, उच्यते—शुकादिवाक्ये भ्रान्तप्रतारकवाक्ये च प्रमाणशब्दत्वेनाप्रयुक्तत्वाद् वेदवदीश्वरस्यैव यथार्थवाक्यार्थज्ञानं गुणो हेतुः तस्य कार्यमात्रकर्तृत्वात्, नचैवं शब्दाभासोच्छेदः तस्यापीश्वरकर्तृकत्वादितिवाच्यं, तद्वाक्यार्थस्यासत्त्वेनेश्वरज्ञानाविषयत्वात् एवं लिङ्गाभासजन्यप्रमायामपीश्वरस्यैव यथार्थलिङ्गज्ञानगुणः ।

२ तथा च वेदमहाजनयोरभावात् केन कस्य परिग्रह इतिभावः ।

३ अनित्यज्ञानवत्त्वेन भ्रमादिशङ्काकलङ्कितत्वेन नित्यसर्वज्ञपूर्वकत्वाच्च प्रकारान्तरासम्भव इत्यर्थः ।

ग्रहस्याऽपि तदा अभावात् । शब्दस्यानित्यत्वं उत्पन्नो गकार इतिप्रतीतिसिद्ध, (१)प्रवाहाविच्छेदरूपनित्यत्वमपि प्रलयसम्भवान्नास्तीति भावः । कपिलादय एव सर्गादौ पूर्वसर्गाभ्यस्त योगजन्यधर्मानुभवात् साक्षात्कृतसकलार्थाः कर्तारः सन्तु, इत्यत आह तदन्यस्मिन्निति । विश्वनिर्माणसमर्था अणिमादिशक्तिसम्पन्ना यदि सर्वज्ञास्तदा लाघवादेक एव तादृशः स्वीक्रियतां स एव भगवानीश्वर.(२) अनित्यासर्वविषयकज्ञानवति च विश्वास एव नास्तीति वैदिकव्यवहारविलोप इति न विधान्तरसम्भव.(३) ईश्वरानङ्गीकर्तृनये इति शेषः ॥ १ ॥

(४) 'ननु सर्गप्रलयसम्भवादिति न युक्तं प्रलये (५)मानाभावात्

---

१ अध्यापकाध्येतृपारम्पर्येण कालमात्रस्य वेदाधिकरणत्व सिध्यतीत्याशङ्कायामाह, प्रवाहाविच्छेदेर्णेति । तथाच,

वेदस्याध्ययन सर्वं गुर्वध्ययनपूर्वकं । वेदाध्ययनवाच्यत्वादधुनाध्ययनं यथेतिमीमांसकैर्गीयमानो हेतुरप्रयोजकोऽनैकान्तिकश्च भारतस्यैव वक्तुं शक्यत्वात् भारताध्ययनं सर्वं गुर्वध्ययनपूर्वकं भारताध्ययनवाच्यत्वादिदानीन्तनभारताध्ययनवदिति ।

२ तथाचेयमभियुक्तोक्तिः—

अनेकेश्वरवादो हि नातीवहृदयङ्गम.
ते चेत्सदृशसङ्कल्पाः कोऽर्थो बहुभिरीश्वरैः ।

३ न प्रकारान्तरसंभव इत्यर्थ. ।

४ प्रलये सर्गादौ च वेदमहाजनयोरभावात् कथं वेदस्य प्रामाण्यमिति पूर्वमुक्तं तत्र वादी प्रत्यवतिष्ठते नन्विति ।

५ प्रलयेसाधकाभावमाह, मानाभावादिति ।

इति । [1] अहोरात्रस्य[2] व्यवहिताहोरात्रपूर्वकत्वनियमात् कर्मणा[3] विषमविपाकतया[4] कालोपाधित्वस्य भोगव्याप्यत्वात् युगपददृष्टस्य च वृत्तिनिरोधानुपपत्तेः, ब्राह्मणस्य ब्राह्मणजन्यत्वनियमात् सर्गाद्युत्पन्नस्य ब्राह्मणत्वाभावात् उत्तरकालेऽपि ब्राह्मणव्यवहारानुपपत्तेः[5], प्रयोज्यप्रयोजकयोरभावात् सङ्केतग्रहाभावे शब्दव्यवहारानुपपत्ते, घटादिनिर्माणे नैपुण्यस्य पूर्वदर्शनसापेक्षस्य सर्गादावभावात्[6] घटादिसम्प्रदायोच्छेदादित्यादिर्बाधकाश्च' तत्राह ।

वर्षादिवद्भवे नाधिर्वृत्तिरोधः सुषुप्तिवत् ।
उद्भिद्वृश्चिकवद्वर्णा मायावत् समयादयः[7] ॥ २ ॥

१ साधकाभावमुक्त्वा तद्रूपमेव बाधकपञ्चकं विवृणोति, अहोरात्रेत्यादिना, साम्प्रतिकाहोरात्रे तथादर्शनादितिभाव ।

२ पूर्वसर्गाहोरात्रपूर्वकत्वेन प्रलयेपिमाध्यसिद्धेराह, अव्यवहितेति-तथाच अहोरात्र अव्यवहिताहोरात्रपूर्वकं, अहोरात्रत्वात्, साम्प्रतिकाहोरात्रवदित्यनुमानमेकं बाधकमितिभाव. ।

३ कर्मजन्यादृष्टानाम ।

४ विषमो विभिन्नकालिको विपाको भोगो येषा तत्वेन-विभिन्नकालिकभोगजनकतयेति पर्यवसितोऽर्थ. ।

५ ब्राह्मणादीनां ब्राह्मणादिमातापितृजन्यत्वनियमेन सर्गादौ तदभावात् सा व्यवस्था न स्यात ।

६ यथा घटादिः क्रियते तथा दर्शनादित्यर्थः ।

७ यथा वर्षादिन अव्यवहितवर्षादिनपूर्वकं वर्षादिनत्वात साम्प्रतिकवर्षादिनवदित्यत्र राश्यादिभेदसमर्गभेदउपाधि तथा, अहोरात्रत्वरूपोपिहेतुरव्यवहितससारपूर्वकत्वरूपेण भवोपाधिना सोपाधित्वेन नाव्यवहिताहोरात्रपूर्वकत्वनिरूपितनियमवानित्यर्थः, सुषुप्तौ यथा कर्मणां विरोधस्तथान्यत्रापिस्यादित्याह, वृत्तिरोधइति ।

यथा वर्षादिनस्याव्यवहितवर्षादिनपूर्वकत्वे साध्ये राशिविशेषावच्छिन्नरविकालपूर्वकत्वमुपाधिस्तथाऽहोरात्रस्याव्यवहिताहोरात्रपूर्वकत्वेऽव्यवहितसंसारपूर्वकत्वमुपाधिः, भवोपाधिः संसारावच्छेदककालोपाधिः स एव उपाधिरित्यर्थः । सुषुप्तिकाले कतिपयव्यक्तिनिष्ठभोगजनकादृष्टनिरोधवत् कालविशेषात् समस्तात्मना समस्तादृष्टनिरोधस्तदिदमुक्तं वृत्तिरोधः सुषुप्तिवदिति । उद्भिद् शाकविशेषः, तस्य यथा तण्डुलकणात् शाकविशेषबीजाच्च उद्भवः, यथा वा वृश्चिकस्य गोमयाद्वृश्चिकाच्च उद्भवस्तथा कालविशेषेऽदृष्टविशेषात् केवलात् इदानीञ्च ब्राह्मणात् ब्राह्मणोत्पत्तिः वैजात्यस्य कार्यतावच्छेदकत्वान्न व्यभिचारः । यथा मायावी सूत्रसञ्चाराधिष्ठितदारुपुत्रकं कृत्वा दारुपुत्रक घटमानयेत्यादि नियोज्य घटानयनं सम्पाद्य बालकस्य व्युत्पत्तौ प्रयोजकस्तथेश्वरोऽपि प्रयोज्यप्रयोजकभावापन्न शरीरद्वय परिग्रह्य व्यवहारं कृत्वा तदानीन्तनानां शक्तिं ग्राहयति । एवं घटादिसम्प्रदायमपि स्वयं कृत्वा शिक्षयति, तदिदमुक्तं मायावत् समयादय इति । समयः शक्तिग्रहः ॥ २ ॥

बाधके निरस्ते साधकमप्याह ।

जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः ।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ॥ ३ ॥

---

यथा तण्डुलीयवृश्चिकयोस्तत्पूर्वकत्वेपि आद्यौ तौ तण्डुलकणगोमयाभ्यां भवतस्तथा ब्राह्मणादीनां तत्पूर्वकत्वेपि सर्गादौ तज्जनककर्मोपगृहीतभूतभेदात्स्यादित्याह-उद्भिद्वदिति, प्रयोज्यप्रयोजकाद्यधिष्ठातुरीश्वरस्यैव व्यवहारान्मायाविव्यवहारादिव तद्व्युत्पत्तिः स्यादित्याह-मायावदिति-संक्षेपतस्सर्वबाधकोद्धारः ।

सम्प्रदायस्य वेदादिसम्प्रदायस्य ह्रासोऽनुमीयता, कुतः जन्मादेर्ह्रासदर्शनात् । प्रयोगश्च, वेदादिसम्प्रदायोऽयमत्यन्तोच्छिद्यते[1] ह्रसमानत्वात् प्रदीपवत् । स्वरूपासिद्धिद्वारायाह जन्मेति । पूर्वं मानस्यः प्रजास्ततः पुत्रमात्रार्थिताऽयुक्तमैथुनजाः सम्प्रति सम्भोगकामिप्रवृत्त्यार्जितजन्मान इति जन्मह्रासः । पूर्वं चरुप्रभृतिषु संस्कारः ततो गर्भे ततो जननानन्तरम्, इदानीं कथञ्चिदिति संस्कारह्रासः । पूर्वं सहस्रशाखस्य चतुर्वेदस्याध्ययनं तत एकस्याः शाखाया इत्यादिक्रमेण विद्याह्रासः । विद्यादेरित्यादिना वृत्तिधर्मादिसंग्रहः, पूर्वमुञ्छशिलवृत्तयस्ततोऽयाचितवृत्तयस्ततः कृष्यादिवृत्तयस्ततः सेवावृत्तय इति वृत्तिह्रासः । पूर्वं तपोज्ञानयज्ञदानात्मकश्चतुष्पाद्धर्मस्ततस्त्रेतादौ एकैकह्रासः कलौ च विसष्ठुल.[2] स्खलद्वानैकपादिति धर्महह्रासः । पूर्वं यज्ञशेषभुजस्ततोऽतिथिशेषभुजस्ततः स्वार्थमाधितभुजस्ततो भृत्यादिसहभुज इत्यपि धर्मह्रासः । स्वाध्यायस्याध्ययनस्य कर्मणो यागादेः शक्तेः सामर्थ्यस्य ह्रासात्.[3] अध्ययनशक्तेः

---

१ स्वसजातीयानधिकरणकालवृत्तिध्वंसप्रतियोगित्वमेवात्यन्तोच्छेदः, स्वसजातीयानधिकरण कालः प्रलयकाल एव तद्वृत्तिध्वंसप्रतियोगित्व वेदादिसम्प्रदायस्येतिभाव. ।

२ अतिजीर्णः ।

३ ननु पूर्वं विद्याह्रासइत्युक्तं अधुना तु अध्ययनह्रासइत्युक्तो कुतो न पौनरुक्त्यमित्याशङ्क्याह, अध्ययनशक्तेरिति, तथा चाध्ययनशक्तिह्रासादध्ययनरूपकार्यस्यह्रासः स एव विद्याशक्तिह्रास. विद्याशक्तिरूपत्वादध्ययनस्येति प्रदर्शनार्थमेव पृथगुपन्यास इतिभाव. ।

कारणस्य ह्रासात् विद्याशक्तेः कार्यस्य ह्रास इति पृथङ्निर्देशः । एवञ्च ब्रह्माण्डनाशे तदन्तर्गतप्राणिना नाश इति प्रलयसिद्धिः। भक्ष्यपेयाद्यद्वैतरागजीविकाकुतर्काभ्यासव्ययताभिसन्धिपाषण्डसंसर्गप्रतारणादिनिबन्धनान्या या प्रवृत्तिर्यागादौ तद्वान् महाजनः, तत्परिग्रहात् वेदप्रामाण्यमिति ॥ ३ ॥

स्तवकार्थसंग्राहकश्लोकमाह ।

(१)कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन् ।
हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीडति ॥
तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवम्
विश्वैकभुवं शिवं प्रति नमन् भूयासमन्तेष्वपि ॥ ४ ॥

## इति द्वितीयः स्तवकः ।

---

१ स्तवकार्थं संग्रहणेनेश्वरमुपश्लोकयति- कारं कारमित्यादिना, अन्तेष्वपि, अन्तकालेष्वपि तं प्रति, तमुद्दिश्य नमन् नमस्कुर्वन् भूयास मित्याशंसायांलिङ्, स क इत्याकाङ्क्षायामाह, य इन्द्रजालमिव, अलौकिकं लोकविलक्षणं अद्भुतमयं विचित्रस्वरूपं जगत्कार्यजातं आभोगपयेन कृत्वा संहरन संहारं च कुर्वन् पुनरपि तज्जातीयमेव कार्यजातमुत्पादयन् क्रीडति, स्वस्वरूपेण स्फुरति, ननु सहकारिविशेषमन्तरेण कथं विचित्रकर्मकृत मित्याकाङ्क्षायामाह मायावशादिति, सृष्टिसंहारहेतुभूतादृष्टसहकारेणेत्यर्थः.- तं कीदृशं देवं स्तुत्यं स्तुतिप्रयोजकमाह-निरवग्रहेति-निष्प्रतिबद्धस्फुरदिच्छाप्रभावं अव्याहतकाममितियावत् विश्वासैकभुवं प्रमादादिपुरुषदोषविनिर्मुक्तं भवं जगन्मूलकारणं शिवं मङ्गलस्वरूपम ॥

# तृतीयः स्तबकः ।

तदभावावेदकप्रमाणसम्भवादिति तृतीयविप्रतिपत्तिः[१] । भूतले घटाभाववदीश्वरस्याप्यनुपलब्धेरभावस्य ग्रहात्, [२]परमात्मनो योग्यतया योग्यानुपलब्धे[३]रभावात् नाभावग्रहो यदि तदा शशशृङ्गस्याप्ययोग्यस्य नाभावः सिद्ध्येदित्यत्राह ।

---

१ अनुपलब्धिरभावग्राहिका न वेति विप्रतिपत्तिः, विधिकोटिः बौद्धानामभावकोटिर्नैयायिकानां, नन्वनुपलम्भेनेश्वरस्याभावं वदन् वादी प्रष्टव्यः किं भवताऽनुपलब्ध्या ईश्वरस्याऽत्यन्ताभाव आहोस्वित् अन्योन्याभावः साध्यते उभयत्रेष्टापत्तिरेवास्माकं प्रागभावप्रध्वंससाधनेत्वपसिद्धान्तः, मैवं, क्षित्यादिकं यदीश्वरकर्तृकं स्यात्तदा तद्वत्तया उपलभ्येत यतो नोपलभ्यते अत ईश्वरकर्तृकत्वाऽनुपलब्ध्या क्षित्यादावीश्वरकर्तृकत्वाभावनिश्चयेन क्षितिः सकर्तृका कार्यत्वादित्यनुमानबाधापत्तेरिति परेषामाशयात् ।

२ नन्वनुपलब्धिमात्रस्याभावग्राहकत्वे अतीन्द्रियमात्रोच्छेदप्रसङ्गः, अतो भवद्भिरपि योग्यानुपब्धेरभावग्राहकत्वमभ्युपेयं, तथाचेश्वरस्यायोग्यतया तदनुपलब्ध्या कथमीश्वराभावसिद्धिरित्याशङ्कते, परमात्मन इति । तथाच गौतमीयं सूत्रं, ( नानुमीयमानस्य प्रत्यक्षतोऽनुलब्धिरभावहेतु ) ।

३ ननु केयं योग्यानुपलब्धिर्नाम, किं योग्यस्य प्रतियोगिनोऽनुपलब्धिराहोस्वित् योग्याधिकरणे प्रतियोग्यनुपलब्धिः ? नाद्य, स्तम्भे पिशाचादिभेदस्याप्रत्यक्षत्वापत्तेः न द्वितीय, आत्मनि धर्माधर्माद्यभावस्यापि प्रत्यक्षत्वापत्तेः, अत्रोच्यते योग्या चासावनुपलब्धिश्चेति कर्मधारयाश्रयणात्, योग्यताविशिष्टानुपलब्धिरितियावत्, अनुपलब्धेर्योग्यत्वं च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपमित्यन्यत्रविस्तरः ।

योग्यादृष्टिः कुतोऽयोग्ये प्रतिबन्धिः कुतस्तराम् ।
क्वायोग्यं बाध्यते शृङ्गं क्वानुमानमनाश्रयम् ॥ १ ॥

अयोग्ये परमात्मनि योग्यानुपलब्धिः कुतः, सैव बाधिका, या चास्ति सा न बाधिका, अन्यथाऽऽकाशधर्माधर्मादिविलयापत्तेः । शृङ्गन्तु योग्यमेव तथा च कुतः प्रतिबन्धिः । अयोग्यन्तु शशशृङ्गं न बाध्यते[१] किन्तु साधकाभाव एव तत्र । प्रकृतेच पञ्चमस्तबके साधकस्य वक्तव्यत्वात् । [२]ननु कर्तृत्वव्यापकशरीरप्रयोजनाभिसन्धानयोरभावात् ईश्वरस्याभावोऽनुमेयः[३] इत्यत आह क्वानुमानमनाश्रयमिति । ईश्वरस्याश्रयस्य पक्षस्यासिद्धेः, सिद्धौ च धर्मिग्राहकमानेन अनुमानबाध एव[४] ॥ १ ॥

---

१ तथा च योग्यशशशृङ्गाभावग्रहो न कुत्रापीतिभाव, इदमुपलक्षणं-यथा परमात्मनोऽयोग्यतया न तदनुपलब्ध्या तदभावग्रह तथा परमात्मकर्तृकत्वस्यापि अयोग्यपरमात्मघटितत्वेनायोग्यत्वाच्च तदनुपलब्ध्या तदभावग्रहइतिद्रष्टव्यम् ।

२ व्यापकानुपलब्धिलिङ्गकानुमानबाधकमाशङ्क्य निषेधति, नन्वित्यादिना चेतनप्रवृत्तेः स्वेष्टसाधनताज्ञानव्याप्तत्वनियमेन तद्बाधनेन सापि बाधितैवेत्यर्थः ।

३ अनुमानप्रकारश्च, ईश्वरः कर्तृत्वाभाववान्, कर्तृत्वव्यापकशरीरप्रयोजनाभिसन्धानान्यतराभावात् इति ।

४ तथा च यादृशानुमानेन ईश्वररूपधर्मिसिद्धिस्तादृशादनुमानादेवेश्वरे कर्तृत्वस्यापिसिद्धेः प्रकृतानुमानबाध एवेत्यर्थः ।

(१) 'ननु असतख्यात्युपनीत ईश्वरस्तत्र कर्तृत्वाभावः तस्यैव वाऽभावः साध्य' इत्यत्राह ।

व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता ।

अभावविरहात्मत्व वस्तुनः प्रतियोगिता ॥ २ ॥

व्यावर्त्यः प्रतिषेध्य', तदभाववत्ता भाविकी पारमार्थिकी हि यतः विशेष्यता अभावस्याश्रयता, तथाचालीक न विशेष्यमित्यर्थः । अभावविरहात्मत्व प्रतियोगित्वमवस्तुनो नेति नालीकस्य प्रतिषेधाधिकरणत्ववत् प्रतिषेध्यत्वमपीति भावः[२] ॥ २ ॥

'ननु अयोग्यस्याप्यनुपलब्ध्या कथं नाभावग्रह'[३] इत्यत आह ।

(४) दृष्टोपलम्भसामग्री शशशृङ्गादियोग्यता ।

न तस्यां नोपलम्भोऽस्ति नास्ति सोनुपलम्भने ॥ ३ ॥

---

१ पक्षासिद्धि परिजिहीर्षुराशङ्कते, नन्विति असत अलीकस्य, ख्यातिर्ज्ञान तदुपनीतस्तद्विषयइत्यर्थ , तथाच ईश्वरः सर्वकालवृत्यभावप्रतियोगी प्रत्यक्षाद्यविषयत्वात्, इत्यनुमानेनेश्वराभाव. साधनीय इति भाव. ।

२ तथा च विशेष्यता—अभावाश्रयता वस्तुन एव, नालीकस्येति भावः ।

३ तथाच प्रतियोगितद्व्याप्येतरपरमात्मोपलम्भकारणधर्मोन्द्रियसन्निकर्षबाधनिश्चयाभावादिसवलनरूपयोग्यतासत्वादिति भावः ।

४ शशशृङ्गाद्यलीकस्थले दोषसहकृततद्भानसामग्रीरूपा योग्यता बाधः तस्यां च सत्या नालीकस्यानुपलम्भः उपलम्भस्यैव सत्वात् अनुपलम्भदशायां च तदभानसामग्रीरूपा योग्यतैव नास्तीतिसमाधत्ते, दृष्टोपलम्भेत्यादि ।

योग्यानुपलब्धिरेवाभावग्राहिका, अन्यथाऽतीन्द्रियमात्रोच्छेदापत्तेः । योग्यता च प्रतियोगितद्व्याप्येतरयावदुपलम्भसामग्रीसमवधानम्[१], एवञ्च शशशृङ्गे योग्यता दुष्टा दोषघटिता उपलम्भसामग्री वाच्या, तस्यां सत्यामनुपलब्धिर्न किन्तूपलब्धिरेव स्यात्, अदृष्टे च सा योग्यता नास्तीति ॥ ३ ॥

[२] 'नन्वात्मा किञ्चिदनभिज्ञः स्वनिष्ठकर्तृत्वानिरूपकक्षितिको वा आत्मत्वात्' इत्यत्राह ।

इष्टसिद्धिः प्रसिद्धेऽशे हेत्वसिद्धिरगोचरे ।
नान्या सामान्यतः सिद्धिर्जातावपि तथैव सा ॥ ४ ॥

प्रसिद्धे संसार्यात्मनि पक्षे इष्टसिद्धिः सिद्धसाधनम्, अगोचरे अज्ञाते ईश्वरे हेत्वसिद्धिः हेतोरज्ञानं, आत्मत्वेन सामान्यतः सिद्धः पक्षश्चेत् तत्राप्यस्मदादिस्तदितर आत्मा वा पक्ष इति

---

१ तद्व्याप्य' प्रतियोगिव्याप्यः प्रतियोगिसन्निकर्षइत्यर्थः प्रतियोगिन स्तत्सन्निकर्षस्य च प्रत्यक्षहेतुतया प्रतियोग्युपलम्भकसामग्र्यन्तर्गतत्वात् तादृशसामग्रीसमवधानं कुत्राप्यभावप्रत्यक्षे सम्भवतीत्यत उक्तं प्रतियोगितद्व्याप्येतरेति ।

२ ईश्वरे कर्तृत्वाभावानुमानस्याश्रयासिद्धिदोषदुष्टत्वेपि, आत्मान, सिद्धास्तेषां सार्वज्ञ्यं निषिध्यते, क्षित्यादिकर्तृत्वं च, तथाहि मदितरे न सर्वज्ञाः चेतनत्वादहमिव, नच ते क्षितिकर्तारः पुरुषत्वादहमिव एवं वस्तुत्वादेरपीत्याशयान. शङ्कते नन्विति, किञ्चिदनभिज्ञ' असर्वज्ञ इत्यर्थ', नन्वलीकाभावस्य निरस्तपूर्वत्वात्परेषां सर्वज्ञत्वाप्रसिद्धेः कथं सर्वज्ञत्वाभाव साधयितुं शक्यत इति वाच्य, किञ्चिदनभिज्ञपदेन स्ववृत्तिज्ञानविषयतानवच्छेदकधर्मकत्वस्य विवक्षितत्वात् ।

श्रिकत्वे सिद्धसाधनं हेत्वसिद्धिर्वा [1] । 'नन्वात्मत्व जातिः पक्ष-स्तत्राह जातावपि तथैव सेति । आत्मत्व जातिर्न क्षितिकर्त्री इत्यत्रेष्टसिद्धिः सिद्धसाधन, हेतोश्च तत्रासत्त्वमिति हेत्वसिद्धि-रित्यर्थं ॥ ४ ॥

नन्वागमादिसिद्धात्मनि अकर्तृत्व साध्य तत्राह ।

आगमादेः प्रमाणत्वे बाधनादनिषेधनम् ।

आभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धता ॥ ५ ॥

[2] आगमादे प्रमाणत्वे तत एव ईश्वरस्य कर्तृत्वादिसिद्धौ कर्तृत्वाद्यभावसाधने बाधः । आगमादेरप्रमाणत्वे सैवाश्रयासिद्धिः उद्धता उत्कटा ॥ ५ ॥

अत्र चार्वाकाः "योग्यताविशेषणेन किं 'यत्र प्रत्यक्षं तत्रास्ति' इत्यनुपलब्धि[3]मात्रमेव बाधक स्यात्, [4] अनुमानविलोपश्चेष्ट

---

१ न चात्मत्वं न सर्वज्ञ-सर्व-कर्तृव्यक्तिसमवेतं जातित्वात् गोत्ववत् इत्यनुमानात् न सिद्धसाधनं हेत्वसिद्धिर्वेतिवाच्यम् निषेध्यसर्वज्ञसर्वकर्तृ-व्यक्तिसमवेतत्वस्याप्रसिद्धत्वादलीकाभावस्य प्रागेव निरस्तत्वाच्च निषेधस्या-शक्यत्वात् ।

२ त्वदुपगतागमलोकप्रसिद्धस्येवेश्वरस्यासर्वज्ञत्वमकर्तृकत्वञ्च साध्यत इति शङ्कायामाह, आगमादेरिति ।

३ मात्रपदेन योग्यतादिसहकारिताव्यवच्छेद. ।

४ अनुमानविलोपस्येष्टापत्ति कुर्वता चार्वाकाणा पुनरेव आशय व्याप्तिपक्षधर्मताशालि लिङ्गं हि गमकमभ्युपगतमनुमानप्रामाण्यवादिभि', व्याप्तिश्च, उभयविधोपाधिविधुरः सम्बन्ध. स च चक्षुरादिवच स्वरूपसत् कारणमपितु ज्ञाततया, कः खल्वत्र ज्ञानोपाय., प्रत्यक्षमान्तरं वा, नाद्यः

एव धूमदर्शनानन्तरं वह्न्यर्थप्रवृत्तिश्च सम्भावनामात्रात्" इति तत्राह ।

दृष्टयदृष्टयोर्न सन्देहो भावाभावविनिश्चयात् ।
अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम् ॥ ६ ॥

सम्भावना हि सन्देहः स च दृष्टौ नास्ति तस्य निश्चयात्, अदृष्टौ च नास्ति अनुपलब्धौ तदभावस्यैव निर्णयात् । एवमदृष्ट्या अनुपलब्ध्या, हेतौ प्रत्यक्षकारणे चक्षुरादौ बाधिते सति प्रत्यक्षमपि प्रमाणं न स्यात्, अनुपलब्धिकालेऽपि तस्य सत्त्वे तु व्यभिचारात् नानुपलब्धिरभावावधारणे हेतुः एवञ्च गृहान्निर्गतश्चार्वाकः पुत्रदाराद्यभावमवधार्य विक्रोशेत्, परावृत्तोऽपि कुटुम्बं नासादयेत्, तदा तेषां सत्त्वे चानुपलब्धिर्व्यभिचारिणी न हेतुः स्यादिति[1] ॥ ६ ॥

---

तस्य संयुक्तविषयज्ञानजनकत्वेन वर्तमाने प्रसरसम्भवेपि; भूतभविष्यतोस्तदसंभवेन सर्वोपसंहारवत्या व्याप्तेर्दुर्ज्ञानत्वात्, सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिनेति वचनात, न च व्याप्तिज्ञान सामान्यगोचरमिति वाच्यं व्यक्त्योरविनाभावाभावप्रसङ्गात, नान्त्यः, अन्तःकरणस्य बहिरिन्द्रियानिघ्नतया बाह्येऽर्थे स्वातन्त्र्येण प्रवृत्त्यनुपपत्ते, "चक्षुराद्युक्तविषयं परतन्त्र बहिर्मन" इत्युक्ते, नाप्यनुमानं व्याप्तिज्ञानोपाय, तत्र तत्रापीत्यनवस्थापत्ते. किं च, उपाध्यभावोपि दुरवगमः, उपाधित्वावच्छिन्नस्य प्रत्यक्षत्वनियमासम्भवेन प्रत्यक्षाणामभावस्य प्रत्यक्षत्वेपि. अप्रत्यक्षाणामभावस्याप्रत्यक्षतया अनुमानाद्यपेक्षायामुक्तदोषानिवृत्तेः, धूमादिज्ञानानन्तरमग्न्यादिज्ञाने प्रवृत्तिः प्रत्यक्षमूलकतया भ्रान्त्या वा युज्यते, क्वचित्फलोत्पत्तिप्रतिलम्भस्तु मणिमन्त्रौषधादिवद्यादृच्छिक• सर्वमेतद्धृदि निधायाह, अनुमानविलोपश्चेति ।

१ ननु ना प्रत्यक्ष प्रमाणमितिचार्वाकसिद्धान्तादनुपलब्धि प्रत्यक्षसहकारिणी, नच गेहाद् बहिर्गमनेऽधिकरणेन सहेन्द्रियसन्निकर्षोऽस्तीति

'ननु यद्यनुपलम्भमात्रं नाभावसाधकं तदा अयोग्योपाधि-शङ्कया धूमादावपि व्यभिचारशङ्कया न व्याप्तिनिश्चयः स्यादिति गतमनुमानेन' इत्यत्राह ।

शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम् ।
(१) व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥ ७ ॥

तद्देशतत्कालयोर्व्यभिचाराभावनिश्चयात् कालान्तरस्थदेशान्तरस्थयोर्व्यभिचारशङ्का स्यात् कालान्तरदेशान्तरस्थज्ञानञ्चानुमानादेवेति सिद्धमनुमानम्। शङ्का न चेत्, ततः शङ्काविरहे तरां सुतरामनुमानम् । ननु किं शङ्कानिवर्तकं तत्राह तर्कः शङ्कावधिर्मत इति । विपक्षबाधकतर्काच्छङ्काविरहो मतः सम्मत इत्यर्थः । 'ननु तर्कस्यापि व्याप्तिमूलकत्वेऽनवस्था' इत्यत्राह व्याघातेत्यादि । तर्कमूलव्याप्तौ न शङ्का व्याघातात्, क्लृप्तकारणं विना कार्योत्पत्तिशङ्कायां तृप्त्यर्थं भोजनादौ परप्रतिपत्त्यर्थञ्च शब्दप्रयोगादौ न प्रवर्त्ततेति । एवञ्च तर्कानवतारे शङ्कितोपाधिरेवाप्रयोजक इत्युच्यते । तदुक्तं——

न पुत्राद्यभावनिश्चयः स्यात सन्निकृष्टे ध्वंसानिश्चयाच्चशोकः स्यात, अत एव पर्वते परभागेन सहेन्द्रियासन्निकर्षाद्वाग्न्यभावनिश्चय इति तत्र संशयादनुमानप्रवृत्तिः, अत्राहुः, अधिकरणज्ञानमात्रमभावधीहेतुः न तु तदिन्द्रियसन्निकर्षोऽपि, अतएव देवताद्यभावस्तदधिकरणाऽसन्निकर्षेऽपि गृह्यत इति चार्वाकसिद्धान्तमाश्रित्योक्तम ।

१ व्याघातावधिरिति । व्याघातश्च तर्काभावातिरिक्तशङ्काकारणप्रतियोगिकाभावः, कारणञ्च कोट्युपस्थितिदोषादि तथाच व्याघातादेव यत्र न शङ्कावतारस्तत्र तर्कानपेक्षणाच्चानवस्थेतिभावः ।

'यावच्चाव्यतिरेकित्व [१]शताशेनापि शङ्क्यते ।
विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम्' ॥

विपक्षस्य विपक्षे हेतोरव्यतिरेकित्व सत्त्व यावच्छङ्क्यते तावद्धेतोर्न गमकत्वमिति भावः । व्यभिचारशङ्का च उपाधिशङ्काधीना । तदुक्तम् 'अन्ये परप्रयुक्ताना व्याप्तीनामुपजीवकाः । तैर्दृष्टैरपि नैवेष्टा व्यापकाशावधारणा' इति । अन्ये केचन हेतवः परप्रयुक्ताना व्याप्तीनामुपजीवकाः तथाहि, उपाध्यवच्छिन्नहेतुनिष्ठा व्याप्ति. हेतुतावच्छेदकावच्छिन्नहेतुवृत्तितया ज्ञायते, अत एव उप समीपवर्तिनि स्वसमानाधिकरणे स्वधर्म व्याप्तिम् आदधाति बोधयतीति[२] उपाधिशब्दो जवाकुसुमादिसाधारणः तैः सोपाधिभिर्दृष्टैरपि पक्षे व्यापकाशस्यावधारणा निश्चयो नेष्यते साधारणधर्मेण साध्यसशयजननादित्यर्थः ॥ ७ ॥

'ननूपमानमीश्वरे बाधक स्यात्' अत्रोपमानस्यातिरिक्तप्रमाणस्यानभ्युपगमात् न बाधकत्वमिति वैशेषिकादयः । तत्र सादृ-

---

१ शतांशेनापीति । येन केनापि साधारणधर्मदर्शनादिनेत्यर्थः, अनुत्कटापि शङ्का यावत् स्यादित्यर्थ ।

२ इत्युपाधिरिति । अस्यार्थस्तु, हेतावुपाधिसशये साध्यतदभावसहचारसशयो जायते तदनन्तर पक्षे तादृशहेतुसशय स एव साधारणधर्मज्ञानं तदनन्तरं पक्षे साध्यसशयः स एव व्यभिचारसशय· एतन्मते तत्तदभावसहचरितधर्मवत्वेन ज्ञायमानधर्मिणि तदभावज्ञानं व्यभिचारज्ञानमित्युच्यते तदधीन व्यापकाशस्य व्याप्तेर्निश्चयानुत्पादः । भट्टाचार्यास्तु व्यभिचारसशयेन व्याप्तिनिश्चयानुत्पत्त्या व्यापकाशस्य साध्यस्य निश्चयानुत्पाद इति वदन्तीति भावः ।

श्यस्य पदार्थान्तरस्य ग्राहकमुपमानमिति केचित्, सादृश्यं न द्रव्यं गुणः कर्म वा गुणसमवेतत्वात्, न सामान्यं सप्रतियोगिकत्वात्[1] सामान्यादिवृत्तित्वाच्च, नाभावः सप्रतियोगिकत्वेनाप्रत्ययात् । तच्च न प्रत्यक्षगम्यमिन्द्रियपातमात्रेणाप्रतीतेः, नापि प्रतियोगिज्ञानसहकृतमिन्द्रियं ग्राहकमिति वाच्यं गोसदृशो गवय इति ज्ञानानन्तरं मा गौर्गवयसदृशीत्यसन्निकृष्टगोविशेष्यकग्रहस्याप्रत्यक्षत्वात्, नाप्यनुमानगम्यं लिङ्गाप्रतिसन्धानेऽपि ज्ञायमानत्वात्, न शब्दगम्यं तस्याः [2]सार्वत्रिकत्वादिति तत्राह ।

[3] परस्परविरोधे हि न प्रकारान्तरस्थितिः ।
नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः ॥ ८ ॥

न प्रकारान्तरस्थितिः न नोभयात्मकत्वं, हि यतः परस्परविरोधात्, नैकतापि न भावाभावात्मकत्वमपि, विरुद्धानामिति-हेतुगर्भविशेषणं परस्परविरोधिरूपत्वात् । विरोधमेव प्रतिपादयति उक्तिमात्रविरोधतः । नाभाव इत्युक्ते च भावत्वप्रतीतेः कथमभावता न भाव इत्युक्ते चाभावत्वप्रतीतेर्न भावत्वम् । अयमभिप्रायः-सादृश्यं भावोऽभावो वा उभयकोटिव्यतिरिक्तस्याप्रसिद्धेः, अभावत्वे सप्तमपदार्थत्वं भावत्वे च गुणवत्त्वे द्रव्यत्वं निर्गुणत्वे

---

१ ससम्बन्धिकत्वात् । सम्बन्ध्यग्रहसापेक्षग्रहकत्वादिति भावः ।

२ असार्वत्रिकत्वादिति । चित्रलेखादावसत्त्वादित्यर्थः ।

३ भावाभावातिरिक्तपदार्थस्याप्रसिद्धत्वात्, सादृश्यस्य न भावभिन्नत्वेसति अभावभिन्नत्वं न वा भावाभावात्मकत्वं, अपितु भावाभावान्यतरत्वमेवेति सिद्धान्तं मनसि कृत्याह परस्परेति ।

सामान्यवत्त्वे च गुणान्यत्वे कर्मत्वं तदन्यत्वे गुणत्वं निर्गुण-निःसामान्यभाववत्त्वेऽसमवेतत्वे च समवायत्वं समवेतत्वे च अने-काश्रितत्वे सामान्यत्वम् एकाश्रितत्वे विशेषत्वम् । एवं शक्तिसङ्ख्या-दयोऽपि[1] पदार्था निराकार्याः ॥ ८ ॥

[2]'ननु भवतु सादृश्यं समानधर्म एव, तद्ग्राहकमेवोपमानं मानान्तरं स्यात्, इत्यत्राह ।

[3]साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते ।
अर्थापत्तिरसौ व्यक्तमिति चेत् प्रकृतं न किम् ॥ ९ ॥

अयं गोविसदृश इति ज्ञानानन्तरं सा गौरेतद्विसदृशीति धीः प्रमाणान्तरादेवास्तु । अथैनस्य तद्वैधर्म्यं तस्मिंश्चैतद्वैधर्म्यं विना-ऽनुपपन्नमित्यर्थापत्तिरेवेति, गोसादृश्यं गवयस्य गोर्गवयसादृश्यं विनाऽनुपपन्नमित्यर्थापत्तिरेवेति न मानान्तरं सादृश्यग्राहकं मन्तव्यमिति ॥ ९ ॥

---

१ आदिना पृथक्त्वस्य परिग्रहः, यथा मीमांसकैरतिरिक्तपदार्थतया ऽभ्युपगतानामपि शक्तिसादृश्यपृथक्त्वानां सप्तपदार्थान्तर्गतत्वं तथा सादृश्य-स्यापीतिसमुच्चितार्थं, एकं रूपं रसात्पृथगिति प्रतीतेस्तु गुणादिनिष्ठसंख्या-पृथक्त्वयोर्धीविशेषविषयत्वरूपत्वादिति न काचिदनुपपत्तिः ।

२ नन्वतिरिक्तपदार्थग्राहकत्वेन उपमानस्य प्रमाणान्तरत्वासिद्धा-वपि क्लृप्तपदार्थग्राहकत्वेनैवोपमानस्य प्रमाणान्तरत्वं स्यादित्याशङ्कते, नन्वि-त्यादिना ।

३ साधर्म्यग्राहकत्वस्य प्रमाणान्तरत्वे तुल्ययुक्त्या वैधर्म्यग्राहकस्यापि प्रमाणान्तरत्वं स्यादिति प्रतिबन्धिमुखेन वैशेषिकस्तन्मतं दूषयति, साधर्म्य-मिवेति ।

(१)वैशेषिकादिभिरुपमाने दूषिते नैयायिकः प्राह ।

सम्बन्धस्य परिच्छेदः सञ्ज्ञायाः सञ्ज्ञिना सह ।
प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः ॥ १० ॥

फलमित्यनन्तरं इतीत्यध्याहार्य्यं, सञ्ज्ञाया गवयादिसञ्ज्ञायाः, सञ्ज्ञिना गवयत्वादिविशिष्टेन सह, सम्बन्धस्य शक्तेः परिच्छेदः निश्चयः, उपमानस्य मानान्तरस्य फलमुपमितिः, प्रत्यक्षादेरसाध्यत्वात् इन्द्रियलिङ्गशब्दानामसामर्थ्यात् ॥ १० ॥

"ननु गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यादेव शक्तिधीरस्तु, गवयत्वविशिष्टो धर्मी गवयपदवाच्यो गोसदृशत्वात्" इत्यनुमानाद्वाऽस्तु" तत्राह ।

सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ।
समयो दुर्ग्रहः पूर्वं शब्देनानुमयापि वा(२) ॥ ११ ॥

समयः गवयत्वादिजातिपुरस्कारेण शक्तिरूपसम्बन्धः, स च दुर्ग्रहः शब्दादनुमानाद्वा न सम्भवति, गवयत्वस्य तेन पुराऽग्रहीतत्वात् । न च सादृश्यमेव प्रवृत्तिनिमित्ततया गृह्यतां, तस्य गुरुत्वेनाप्रवृत्तिनिमित्तत्वात् ॥ ११ ॥

---

१ सादृश्यज्ञानं नोपमानफलमपि तु शक्तिनिर्णय एवेति नैयायिकसिद्धान्तमाह, वैशेषिकादिभिरिति ।

२ सादृश्यस्य अनिमित्तत्वात् अप्रवृत्तिनिमित्तत्वात् निमित्तस्य प्रवृत्तिनिमित्तस्य गवयत्वस्य अप्रतीतितः अग्रहात् पूर्वं समयः गवयत्वविशिष्टे गवयपदस्य शक्तिरूपसम्बन्धः, शब्देन अतिदेशवाक्येन अनुमानेन वा दुर्ग्रहः ग्रहीतुमशक्यः, इति कारिकार्थः ।

(१) "ननु प्रथमतो गवयत्वस्याप्रतीतत्वेऽपि यदा गवयत्व प्रत्यक्षं तदा गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्याल्लक्षणया गवयत्वपरात् तेन रूपेण शक्तिधीरस्तु" तत्राह ।

(२) श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ।
पदार्थान्वयवैधुर्य्यात्तदाक्षिप्तेन सङ्गतिः ॥ १२ ॥

गोसादृश्यसामानाधिकरण्येन (३)गवयपदवाच्यत्वविषयकज्ञानजनकतया शब्दस्य गवयत्वादिना शक्तिबोधे नाकाङ्क्षा अन्वयस्य पर्यवसानात्, यत्र पदार्था एवान्वयविधुराः केनापि रूपेणान्वयायोग्याः तत्र तदाक्षिप्तेन तेन लक्षणीयेनार्थेन सङ्गतिरन्वयः यथा गङ्गायां घोष इत्यादौ । 'ननु गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादिति सामान्यतोदृष्टमनुमानमितरप्रवृत्तिनिमित्तकत्वबाधे गवयत्वस्य प्रवृत्तिनिमित्तत्वमवगाहताम्' इति चेन्न व्यापकताच्छेदकरूपेणैवानुमितेर्व्यापकविषयत्वात् । 'गवयपदं गवयत्वप्रवृत्तिनिमित्तकम् इतराप्रवृत्तिनिमित्तत्वे सति सप्रवृत्तिनिमित्तकत्वादिति व्यतिरेकि च साध्याप्रसिद्ध्या न सम्भवति, व्यतिरेकव्याप्त्यप्रतिसन्धानेऽपि गवयत्व आश्रयो गवयपदवाच्य इति धियो

१ ननु यदा गवयत्वविशिष्टपिण्डप्रत्यक्ष तदा लाघवप्रतिसन्धानेन गवयत्वे प्रवृत्तिनिमित्तत्वनिश्चयेन तत्रातिदेशवाक्यतात्पर्यनिश्चयात्तादृशवाक्यघटकगोसदृशपदलक्षणया गवयत्वविशिष्टे शक्तिग्रह सम्भवतीति कथमुपमानस्य प्रमाणान्तरत्वमिति शङ्कते, नन्वित्यादिना ।

२ शक्यान्वये पर्यवसानात् जनितान्वयबोधादितियावत् ।

३ गवयेति । तथाहि गवयपदं किंचिद्धर्मावच्छिन्नशक्यताकं व्याकरणानिष्पन्नपदत्वात् ।

ऽनुभवसिद्धत्वाच्च उपमानं प्रमाणान्तरम्[1] । एवं धिक्करभमति-दीर्घग्रीवमतिकठोरकण्टकाशिनमपसदं पशूनामित्यादिवाक्यार्थ-ज्ञानानन्तरं तादृशपिण्डदर्शने करभपदवाच्यताग्रहोऽप्युपमाना-देवेति । उपमानं तु शक्तिमात्रपरिच्छेदकतया नेश्वरे बाधकमिति भावः[2] ॥ १२ ॥

'शब्दस्तु नेश्वरे बाधकत्वेन शङ्कनीयः अनुमानानतिरेकात्' इति वैशेषिकाः, पदश्रवणानन्तरं पदार्थस्मरणे एते पदार्थाः पर-स्परं संसर्गवन्तः आकाङ्क्षायोग्यतासत्तिमत्पदस्मारितत्वात् दण्डेन गामभ्याजेति पदस्मारितपदार्थवत्' इत्यनुमानात् संसर्गसिद्धिः, किं वा 'एतानि पदानि स्मारितपदार्थसंसर्गप्रमापूर्वकाणि आका-ङ्क्षादिमत्पदत्वात्' इत्यनुमानात् तत्सिद्धिः [3]ज्ञानज्ञानस्य तद्विषयविषयकत्वनियमात् इति, अत्राह ।

---

१ इदमुपलक्षणम् । वैधर्म्यविशिष्टवस्तुदर्शनं करणं, जलादिवि-धर्मगुणवती पृथिवीत्यतिदेशवाक्यस्मरणं व्यापारः, पृथिवीत्वावच्छेदेन पृथिवीपदवाच्यत्वोपमितिः फलमित्यपि बोध्यम् उपमिनोमीत्यनुव्यवसाया-च्चोपमानस्य प्रमाणान्तरत्वम् ।

२ तथाचेश्वरपदं न किञ्चिदर्थवाचकं किञ्चित्सदृशावाचकत्वा-दित्यनुमानं परास्तमेवेति भावः ।

३ ननु तादृशबोधपूर्वकत्वसिद्धावपि न तत्पदार्थवत्तत्पदार्थसिद्धि-रित्यत आह, ज्ञानज्ञानस्येति प्रकृते पदार्थसंसर्गप्रमानुमिते, तद्विषयेति, तस्य पदार्थसंसर्गप्रमायाः य संसर्ग पो विषयः स एव विषयो यस्य तादृशत्व-नियमादित्यर्थः ।

अनैकान्तः परिच्छेदे सम्भवे च न निर्णयः ।
आकाङ्क्षा सत्तया हेतुर्योग्यासत्तिरबन्धना ॥ १३ ॥

अत्र पदार्थपक्षकानुमाने संसृष्टा एवेति यदि संसर्गवत्त्वं साध्यते, सम्भावितसंसर्गका इति संसर्गस्वरूपयोग्यत्वं वा, आद्ये पयसा सिञ्चतीत्यादावनैकान्तः, द्वितीये न संसर्गनिर्णयः, अन्वयप्रयोजकरूपवत्त्वरूपयोग्यताया हेतुविशेषणीकृतत्वेन सिद्धसाधनाच्च[1]। [2]द्वितीये प्रयोगे आकाङ्क्षा सत्तया इति । आकाङ्क्षा हि समभिव्याहृतपदस्मारितपदार्थजिज्ञासा, घटमित्युक्ते आनय पश्येति, आनयेत्युक्ते घटं पटं वेति जिज्ञासादयः । [3]'ननु योग्यतासहितासत्तिरेव हेतुरस्तु, तत्राह, योग्यासत्तिरबन्धना इति व्याप्तिशून्या, अयमेति पुत्रो राज्ञः पुरुषोऽपसार्य्यतामित्यत्र निराकाङ्क्षयोराजपदपुरुषपदयोर्व्यभिचारात् ॥ १३ ॥

[4]प्राभाकरास्तु "वेदस्यापौरुषेयतया तत्र वक्तृज्ञानानुमानासम्भवात् शब्दः प्रमाणं, लोके तु आप्तोक्तत्वज्ञानमपेक्षितं, तथाच

---

१ अनुमितेः पूर्वं हेतुतावच्छेदकविशिष्टहेतुज्ञानस्य नियतापेक्षणीयत्वादितिभावः ।

२ पदपक्षकानुमाने दोषमाह, द्वितीये प्रयोग इति ।

३ ननु योग्यताया आसत्तेश्च ज्ञानं शाब्दबोधोपयोगि, अतो योग्यताविशिष्टा आसत्तिरेव हेतुरस्तु किमाकाङ्क्षाया हेतुघटकत्वेनेत्याशङ्कते नन्विति ।

४ लौकिकशब्दमात्रस्यानुवादकत्वेनाप्रमाणत्वं वदतां प्राभाकराणां मतमुत्थाप्य निरस्यति प्राभाकरास्त्वित्यादिना ।

'अयं वक्ता स्वप्रयुक्तवाक्यार्थयथार्थज्ञानवान् अप्रमादजन्यवाक्यार्थज्ञानजन्यवाक्यप्रयोक्तृत्वात्' इत्यनुमानाद्वक्तृज्ञानावच्छेदकतया, उत्तरकालं वा एते पदार्थाः परस्परं संसृष्टाः वक्तृयथार्थज्ञानविषयत्वात्' इत्यनुमानात् साक्षात् वाक्यार्थमिद्धेः, क्लृप्तसामर्थ्यात् शब्दात् पुनरन्वयधीरित्यनुवादको लौकिकः शब्दो न प्रमाणम्" इति प्राहुस्तत्राह ।

निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये ।
व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता[1] ॥ १४ ॥

वेदेऽवधारितसामर्थ्याच्छब्दाल्लोकस्थलेऽपि प्रागर्थनिर्णये लिङ्गस्यैवानुवादकत्वं, व्याप्तिस्मृतिविलम्बेनानुमानस्य शब्दापेक्षया विलम्बितधीजनकत्वात् ॥ १४ ॥

[2] 'नन्वाप्तोक्तत्वस्य संशये व्यतिरेके च शाब्दज्ञानानुत्पत्त्या निर्णयो हेतुर्वाच्यः, आप्तोक्तत्वञ्च प्रकृतवाक्यार्थगोचरयथार्थधी-

---

१ निर्णीतशक्तेः, निर्णीतयोग्यताकाङ्क्षादिमत्त्वरूपसामर्थ्यादित्यर्थः, प्रागेव अनुमानात्पूर्वमेव निर्णये शब्दात्मकनिर्णये, अनुवादिता गृहीतग्राहित्वम् । तथाच तुल्ययुक्त्या वेदे यादृशी सामग्री तादृश्येव लोके नत्वपेक्षणीयान्तरमस्ति इति वैदिकशब्दस्थल इव मानाभावेन नाप्तोक्तत्वनिश्चयस्य हेतुत्वं येन वक्तृयथार्थज्ञानानुमानमपेक्षणीयं भवेदिति भावः ।

२ यस्य संशये व्यतिरेकनिश्चये च यदनुत्पादस्तन्निश्चयस्तत्र कारणमिति नियममभिप्रेत्याप्तोक्तत्वनिश्चयस्यान्वयधीजनकत्व प्राभाकरः पुनः शङ्कते, नन्वित्यादिना ।

जन्यत्वमिति, वाक्यार्थधीः प्रथमतोऽनुमानादेव[1] वाक्या इत्यत्राह ।

व्यस्तपुंदूषणाशङ्कैः[2] स्मारितत्वात् पदैरमी ।

अन्विता इति निर्णीते वेदस्यापि न तत् कुतः ॥१५॥

आप्तोक्तत्वनिश्चयस्य हेतुत्वे मानाभावः, बाधकप्रमाविरहरूपयोग्यताज्ञानविलम्बादेवायोग्येऽन्वयधीविलम्बसम्भवात्, अन्यथा वेदेऽपि अपौरुषेयत्वधीर्हेतुरस्तु तथाच तत्रापि 'अमी वैदिका अर्था 'अन्विताः' परस्परं संसृष्टाः व्यस्तपुंदूषणाशङ्कैः पदैः स्मारितत्वात्, इत्यनुमानात् संसर्गे निर्णीते तदनुवादकत्वं वेदस्यापि न कुतः ।

(३) "यत्तु पदं न करणं किन्तु पदार्थ एव, अत एव पदार्थकरणकवाक्यार्थज्ञानात् कविकाव्यादिकं[4], द्वारमित्यत्र

१ अनुमानादेवेति । तथाच शाब्दबोधात्पूर्वं अनुमानापेक्षायां लौकिकः शब्दोऽनुवादक इति, वेदस्थले तु दोषवत्पुरुषाप्रणीतत्त्वेनाप्तोक्तत्वशङ्कैव नावतरतीति न तत्र निश्चयस्य हेतुत्वमिति लौकिकशब्दप्रमाणमितिभावः ।

२ व्यस्ता निरस्ता, पुंदूषणानां भ्रमप्रमादादिपुरुषदोषाणां आशङ्का येषु तैरित्यर्थः ।

३ पदार्थस्य अन्वयबोधकारणतावादिनो भट्टस्य मतमुत्थाप्य निरस्यति, यत्त्विति ।

४ कवयो हि अपूर्वं वाक्यार्थमनुभूयैवाभिनवं काव्यं विरचयन्ति तादृशापूर्ववाक्यार्थज्ञानमसन्निकृष्टविषयकत्वान्न प्रत्यक्षं व्याप्तिज्ञानजन्यत्वाभावान्नानुमितिः शब्दाभावाच्च शाब्दबोध. परन्तु अन्वयबोध एव तादृशबोधे चिन्तावशोपस्थिताः पदार्था एव हेतवः न तु पदानीति न शब्दः प्रमाणान्तरमिति भावः ।

द्वारोपस्थितावपि पदार्थनिष्ठाकाङ्क्षाविरहेणान्वयाबोधः, 'शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते' इति न्यायात् । अतएव 'पदार्थानामवच्छेदकत्व पदजन्योपस्थितिं विना पदार्थान्वयाबोधात्
[१]तदुक्तम्—

'प्राथम्यादभिधातृत्वात् तात्पर्योपगमादपि ।
पदानामेव सा शक्तिर्वरमभ्युपगम्यताम्' ॥

अभिधातृत्वात् पदार्थोपस्थापकत्वात्' इति गुरुमतमपास्तं, पदानामित्यत्र [२]आप्तानामिति प्रक्षेपेणापि [३]आप्तोक्तत्वस्यावच्छेदकत्वापातात्, तथा चावश्यस्वीकार्यपदार्थोपस्थितौ पदमन्यथासिद्ध न करणम्" इति, [४]तत्र पदार्थानामतीतादिरूपतया अकारणत्वात्, पदार्थस्मरणस्यापि निर्व्यापारतया अकरणत्व तु, पदज्ञानस्यैव करणत्वात्, पदार्थस्मृतेर्व्यापारत्वात्, कविकाव्यादिस्थले च मानसज्ञान हेतुरिति[५] ॥ १५ ॥

---

१ पदस्य कारणत्वे प्राचां संवादमुपन्यस्यति, तदुक्तमिति ।

२ आप्तानामितीति । गुरुमतवादो पदार्थकरणतावादिनं श्लोके पदानामिति निवेशेन दूषितवान् तथा सति पदार्थकरणतावाद्यपि पदानामित्यत्राप्तानामिति प्रक्षिप्य दूषयति, प्राथम्यं प्रथमोपस्थितित्वं तच्चपदाप्तोक्तत्वयोस्तुल्यम्, अभिधातृत्व च पदे पदार्थोपस्थित्यनुकूलशक्तिमत्वं आप्तेच परोच्चारयितृत्व, तात्पर्यं तादृशेच्छाविषयताविशेषः आप्तेच तादृशेच्छावत्वमित्युभयत्रैव श्लोकार्थनिर्वाहः ।

३ आप्तस्य कारणत्वापातादित्यर्थ ।

४ भट्टमतंदूषयति तत्रेति ।

५ कविकाव्यानुरोधेन स्वीकृतज्ञानस्य प्रत्यक्षत्वेनैवोपपत्तौ वैजात्यन्तरकल्पने मानाभाव इत्यर्थः ।

'ननु शब्दोऽतिरिच्यतां प्रमाणं, स एव बाधकोऽस्तु, तथाहि—

'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।

अहङ्कारविमूढात्मा कर्ताहमिति मन्यते' ॥

इति गीतां पठन्ति, प्रकृतेर्बुद्धितत्त्वस्य, गुणैः सत्त्वादिभिः, क्रियमाणानि कर्माणि मोहादहं कर्तेति चेतनो मन्यते, तेनाभिमानिकं कर्तृत्वं न पारमार्थिकं, न च सर्वज्ञस्याभिमानः विशेषदर्शनात्, [1]कर्तेति तृन्निति न षष्ठी इति, अत्राह ।

न प्रमाणमनाप्तोक्तिर्नादृष्टे क्वचिदाप्तता ।

अदृष्टदृष्टौ सर्वज्ञो न च नित्यागमः क्षमः ॥ १६ ॥

अयं हि सर्वकर्तृत्वाभावावेदकः शब्दः अनाप्तोक्तश्चेन्न प्रमाणम्, आप्तोक्तश्चेदेतदर्थगोचरज्ञानवतो नित्यसर्वविषयकज्ञानवत्त्वम् [2]इन्द्रियाद्यभावात्, आगमस्य च नित्यत्वं दूषितमेव प्रागिति वेदकारी नित्यः सर्वज्ञः सिद्ध्यति ॥ १६ ॥

नन्वसत्त्वबोधकागमानां[3] का गतिः, तत्राह ।

---

१ ननु कर्तेति कृद्योगे कर्मणीत्यत्र कथं न कर्मणिषष्ठीत्यत आह, न षष्ठीति, "न लोकाव्ययनिष्ठाखलर्थतृनाम्, ( २ । ३ । ६९ ) इति निषेधाचात्र षष्ठीति भाव ।

२ ननु तावतापि कथं नित्यसर्वविषयकज्ञानवत्त्वसिद्धिरित्यत आह, इन्द्रियाद्यभावादिति, तथाच इन्द्रियादिजन्यं ज्ञानं इन्द्रियसन्निकर्षादिनियन्त्रितविषयकं, अशरीरस्येन्द्रियाद्यभावात्तज्ज्ञानं सुतरां नित्यं विनिगमकाभावात्सर्वविषयकञ्चेति नित्यसर्वज्ञत्वेनेश्वरसिद्धिरिति भावः ।

३ अकर्तृत्वबोधकागमानामित्यर्थः ।

नचासौ क्वचिदेकान्तः सत्त्वस्यापि प्रवेदनात् ।
[1]निरञ्जनावबोधार्थो न च सन्नपि तत्परः ॥ १७ ॥

असावागमो नासत्त्वमात्रपर एव, सत्त्वस्यापिबहुशः 'मत्तः सर्वं प्रवर्तते, इत्यादिभिः प्रतिपादनात्, द्वयोश्च न मुख्यार्थत्वं विरोधात्, विनिगमकचिन्तायां विशेषगुणशून्यात्मस्वरूपस्य ध्येयत्वतात्पर्य्यकत्वं बाधकश्रुतीनां, साधकश्रुतीनाञ्च कार्यकारणभावादितर्कमूलकानुमानसाचिव्येन मुख्यार्थकत्वात् ॥ १७ ॥

ननु यद्यसौ सर्वज्ञः स्यात् अनुपदिश्याऽपि[2] प्रवर्तयेदित्युपदेशानुपपत्तिरेवास्तु ईश्वरे बाधिका[3], नह्ययमनुपदिश्य स्वय प्रवर्तयितुं न जानाति सर्वज्ञत्वानुपपत्तेः[4], अर्थापत्तिश्च मानान्तरं तत्राह ।

हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा ।
तदभावात् प्रवृत्तिर्न कर्मवादेऽप्ययं विधिः ॥ १८ ॥

प्रमाणऽसति न प्रमा, प्रमाणरूपहेत्वभावे फलाभावात् प्रमाविरहात्, प्रमाविरहे च न प्रवृत्तिः कारणाभावात्, प्रमा-

---

१ सन्नपि आपातत असत्वबोधकत्वेन प्रतीयमानोऽपिकश्चिदागमः निरञ्जनावबोधार्थः, आत्मनो यन्निरञ्जनत्व विशेषगुणशून्यत्व तद्ध्येयमित्येवम्पर न च तत्परः नत्वकर्तृत्वपर इत्यर्थः ।

२ वेदमनुक्त्वापि ।

३ ईश्वरे सर्वज्ञत्वाभावसाधिकेत्यर्थ ।

४ नन्वनुपपत्तेः कथं साधकमित्यत आह, अर्थापत्तिश्चेति, तथाच अनुपपत्तिज्ञानस्यार्थापत्तिरूपमानत्वादिति भावः ।

कारणञ्चाग्निष्टोमेनेत्यादिविधिरेव इति नोपदेशव्यर्थता, अन्यथा [1]कर्मवादेऽप्ययं विधिः अदृष्टादेव प्रवृत्तेरुपपत्तेः वेदस्यानर्थक्यापत्तिः । न वाऽर्थापत्तिर्मानान्तरम् ॥ १८ ॥

तदेवाह ।

[2]अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः ।

न मानयोर्विरोधोऽस्ति प्रसिद्धे वाऽप्यसौ समः ॥१९॥

जीवी देवदत्तो गेहे नास्तीति ज्ञानानन्तरं बहिरस्तीति धीरुदाहरणं, तत्रानियम्यस्याव्याप्यस्य नायुक्तिर्नानुपपत्तिः, अनियन्ता अव्यापको नोपपादकः, व्यापकव्यतिरेकेण व्याप्यस्यैव व्यतिरेकात्, तादृशानुपपत्तिज्ञाने व्यतिरेकव्याप्तिधीरेव । [3]यदपि 'क्वचिदपि गेहे नास्तीति ज्ञानानन्तर विरोधज्ञानेऽविरोधाय गेहान्यविषयता क्वचिदस्तीत्यस्येत्यर्थापत्तिः' इति, तदपि न, न हि वास्तवो मानयो[4]र्विरोधः. तथा सति एकं मानं भज्येत, विरोधज्ञानस्य तु विषयभेदव्यवस्थापकत्वमनुमानविध-

---

१ कर्मजन्यादृष्टादेव जगदुत्पद्यते नत्वीश्वरादिति कर्ममीमांसकमतेऽपीत्यर्थः ।

२ देवदत्तो बहिरस्ति गृहास्तित्वाभाववत्वे सति जीवित्वात् यन्नैवं तन्नैवमिति व्यतिरेक्यनुमानेनैवार्थापत्तिप्रलयसम्भवात् अर्थापत्तेर्नानुमितिभिन्नप्रमितिकरणत्वमित्यभिप्रेत्य दूषयति अनियम्येत्यादिना ।

३ यत्र प्रमाणयोर्विरोधः तत्रार्थापत्तिरविरोधोपपादिका विरोधाविरोधयोर्व्याप्यव्यापकभावविरहादनुमानं न सम्भवतीति प्रमाणान्तरत्वमर्थापत्तेरितिकेषाचिन्मत दूषयितुमाह, यदपीति ।

४ क्वचिदस्ति गृहेनास्तीति मानयोः ।

योव, तथाहि विरोधो भिन्नविषयक एकविषयताया विरुद्धत्वे सति प्रमाणसिद्धत्वादिति, अन्यथा धूमोऽप्यनुपपद्यमानो वह्निं गमयेदित्यर्थापत्तिरिति प्रसिद्धमप्यनुमानं न स्यात्, अर्वाग्भागावच्छेदेन वह्न्यनुपलम्भे धूमस्य वह्निसाधनमिति विरोधेऽपरभागावच्छेदेन वह्निव्यवस्थापनमप्यर्थापत्तेरेव स्यात्, अनुमानाभावेऽपि च व्याप्तिग्राहकमानस्य वह्निसाधकत्वमर्थापत्तेरित्यनुमानविलोपः स्यादिति ॥ १९ ॥

अनुपलब्धिश्च नेश्वरे बाधिकेति योग्यादृष्टिरित्यादिनोक्तम्, वस्तुतोऽनुपलब्धिर्मानान्तरमेव नेत्याह।

[1]प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात्।

अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ॥ २० ॥

यत्राज्ञातानुपलब्धिः कारणं तत् प्रत्यक्षं, ज्ञातानुपलब्धिजन्याभावज्ञानस्यानुमानत्वात्, जन्यापरोक्षज्ञानस्य इन्द्रियजन्यत्वात्, अपरोक्षत्वञ्च ज्ञानकरणकान्यत्वं, घटादिप्रत्यक्ष इव घटाभावाध्यक्षेऽपीन्द्रियस्यान्यानुपक्षीणत्वं तु[2] करणत्वम्[3],

---

१ योग्यानुपलब्धिरूपप्रमाणजन्याभावप्रतीतेरित्यर्थः।

इन्द्रियकरणकत्वस्य साध्यत्वं प्रकरणलभ्यं, तत्र हेतुमाह, अपारोक्ष्यादिति। प्रयोगस्तु योग्यानुपलब्धिजन्याभावप्रतीति इन्द्रियकरणजन्यं, अपारोक्ष्यात् घटप्रत्यक्षवत् इति।

२ व्यापारेण व्यापारिणोनान्यथासिद्धिरिति नियमात् व्यापारेणेन्द्रियस्यानन्यथासिद्धत्वात, अन्यथा घटादिप्रत्यक्षेऽपि व्यापारेणेन्द्रियस्यान्यथासिद्धत्वप्रसङ्गादित्यर्थः।

३ एतच्चात्र इन्द्रियनिष्ठकरणतानिरूपकत्वरूपं बोध्यं, अतएव प्रतिपत्तिरूपपक्षे साध्यस्य सङ्गतिः।

अधिकरणप्रत्यक्षाभावेऽपि[1] शब्दादिध्वंसस्य, वायौ रूपाभावस्य च ग्रहात् [2]अधिकरणग्रहेऽप्यनुपलब्धयात्, अज्ञातकरणजन्यज्ञानत्वेन इन्द्रियजन्यत्वानुमानाच्च, भावावेशाच्च चेतसः मनसः, [3]अस्मदादिबाह्यानुभवस्य भावभूतकरणसचिवमनोजन्यत्वनियमात् नानुपलब्धिः करणं किन्त्विन्द्रियमेवेति ॥ २० ॥

साधकान्तरमाह ।

प्रतियोगिनि सामर्थ्याद्व्यापाराव्यवधानतः ।

अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात् ॥ २१ ॥

इन्द्रियाणि करणमिति साध्यं, प्रतियोगिग्राहकत्वात्, यथाऽनुमानं घटस्येव तदभावस्यापि ग्राहकं तद्वदिन्द्रियमपि । 'ननु प्रतियोगिग्राहकत्वमतन्त्रं, अनन्यथासिद्धत्वस्योपाधित्वात्[4] आश्रयग्रहेण इन्द्रियस्यान्यथासिद्धेरित्यत आह व्यापाराव्यवधानत इति । व्यापारेणाधिकरणप्रत्यक्षेण इन्द्रियस्यान्यथासिद्ध्यभावात्, अन्यथा संयोगेन चक्षुरादिकमन्यथासिद्धं भावग्रहेऽपि स्यात् । किञ्चाभावभ्रमस्य दुष्टकरणजन्यत्वमवश्यं वाच्यं, दोष-

१ अधिकरणलौकिकप्रत्यक्षाभावेपीत्यर्थः ।

२ ननु भूतलं घटाभाववदिति प्रत्यक्षस्य भूतलांशेऽपि लौकिकतया तत्र तत्प्रत्यक्षार्थमिन्द्रियस्यापेक्षणीयतया इन्द्रियमन्यथासिद्धमिति तत्रानुपलब्धिकरणताया आवश्यकत्वे सर्वत्रैवानुपलब्धिकरणकत्वमभावप्रत्यक्षस्येतीन्द्रियमन्यथासिद्धमित्यत आह, अधिकरणग्रहेऽपीति ।

३ ईश्वरप्रत्यक्षवारणाय अस्मदादीति, सुखाद्यनुभवे व्यभिचारवारणाय बाह्येति ।

४ अनुमानादौ साध्यव्यापकता इन्द्रिये साधनाव्यापकता बोध्या ।

श्चेन्द्रियादिनिष्ठ एव, अनुपलब्धेर्दोषवत्त्वाभावात्, पित्तादिना इन्द्रियस्यैव दुष्टत्वात्, तदिदमुक्तम् अनाश्रयत्वाद्दोषाणामिति। अधिकरणाभावयोर्विशिष्टधीर्नेन्द्रियजा अभावधीत्वात्, नानुपलब्धिकरणजा भावधीत्वात् अतो विशिष्टग्राहीन्द्रियं स्वीकार्यं[1] तदिदमुक्तं विकल्पनात् विशिष्टविषयकज्ञानात् ॥ २१ ॥

'नन्वनुपलब्ध्या घटाभावस्य ज्ञानं ततश्च घटाभाववद्भूतलमिति ज्ञानं, घ्राणजसौरभोपनयानन्तरं सुरभि चन्दनमिति चाक्षुषवत् इत्यभावग्राहिकाऽनुपलब्धिः कारणतया वाच्या, निर्विकल्पकविषयीकृत एव इन्द्रियेण सविकल्पकविषयतया गृह्यते तथा दर्शनात्[2] । अभावेनेन्द्रियप्रत्यासत्तेरभावात्[3] कथं वा प्रत्यक्षत्वं, विशेषणतायाः सम्बन्धान्तरगर्भत्वात्[4] अवश्यक्लृप्तकारणताकानुपलब्धेरेव[5] करणत्वं नेन्द्रियस्य इत्यत्राह ।

---

१ तथाचायं प्रयोगः—इन्द्रियं अभावलौकिकविषयकग्रहकरणं अभावविशिष्टज्ञानीयधर्मिविषयताप्रयोजकत्वात् इति ।

२ घटादिविशिष्टबुद्धौ निर्विकल्पकविषयीभूतस्यैव घटादेर्भानदर्शनादित्यर्थः ।

३ इन्द्रियाणां प्राप्तार्थग्राहकत्वनियमादिति भावः ।

४ सम्बन्धस्य सम्बन्धिभिन्नत्वनियमेन ग्राह्यस्वरूपस्यासम्बन्धत्वनिश्चयात् समवायानभ्युपगमेनान्यत्र तदकल्पनाच्च, इदमुपलक्षणम् विशेषणताकल्पनेऽस्त्यभावप्रत्यक्षं, तत्सिद्धौ तत्कल्पनमित्यन्योन्याश्रयश्च ।

५ शुक्तौ रजतभ्रमे सति रजतानुपलब्धेरभावादिन्द्रियसम्बद्धस्यापि रजताभावस्याग्रहेणावश्यकत्वादित्यर्थः ।

चेतनान्तराप्रयोज्या या लीला सैवोत्सवो यस्य स तथा, दुःखाभावैकनिदानत्वात्, अतएव उद्भवदतिश्रद्धाः, देवानामपि देवं स्तुत्यं, प्रपद्यामहे ॥ २३ ॥

इति तृतीयस्तबकव्याख्यानम् ॥

---

## चतुर्थः स्तबकः ।

सत्त्वेऽपि तस्याप्रमाणत्वादिति तुरीयविप्रतिपत्तिः[1] ।
ईश्वरो न प्रमाणं तज्ज्ञानस्यागृहीतग्राहित्वाभावेन प्रमात्वाभावात्, ईश्वरस्य प्रमाकर्तृत्व प्रमाकरणत्वञ्च नास्तीति अप्रमाणपुरुषस्य वचः कः श्रद्दध्यादित्यत्राह ।

अप्राप्तेरधिकप्राप्तेरलक्षणमपूर्वदृक् ।
यथार्थोऽनुभवो मानमनपेक्षतयेष्यते ॥ १ ॥

अपूर्वदृक्त्वं अगृहीतग्राहित्वं[2] न प्रमालक्षणं धारावहनबुद्ध्यव्याप्तेः इद रजतमितिभ्रमातिव्याप्तेश्च । स्वमते लक्षणमाह

---

१ इयमत्र विप्रतिपत्तिः ईश्वरः प्रमाणं न वा विधिकोटिरत्र नैयायिकानां, निषेधकोटिर्जैनानाम् ।

२ अगृहीतग्राहित्वञ्च, स्वोत्पत्तिकालीनध्वंसप्रतियोगिस्वसमानाधिकरणज्ञानाविषयविषयकत्वम इदमेव परेषां प्रमाज्ञानलक्षणम् कारिकायां अपूर्वदृगितिपदं भावपर बोध्यम, तथाचापूर्वदृक्त्वमेवागृहीतग्राहित्वम्, अपूर्वस्यागृहीतस्य दृक् दर्शनं ज्ञानं तत्त्वमिति तदर्थः ।

(१) घटाभाववद्भूतलमित्यादिविशिष्टप्रत्ययबलात् अभावेनाधिकरणस्य प्राप्तेर्भवताऽपि स्वीकारात् ॥ २२ ॥

स्तबकार्थसंग्राहकश्लोकमाह ।

प्रत्यक्षादिभिरेभिरेवमधरो दूरे विरोधोदयः
प्रायो यन्मुखवीक्षणैकविधुरैरात्माऽपि नाऽऽसाद्यते ।
तं सर्वानुविधेयमेकमसमस्वच्छन्दलीलोत्सवम्
देवानामपि देवमुद्भवदतिश्रद्धाः प्रपद्यामहे(२) ॥२३॥

इति तृतीयः स्तबकः ।

यस्येश्वरस्य मुखनिरीक्षणैकविधुरैर्धर्मिग्राहकमानबाधितैः प्रत्यक्षादिभिरात्मैव नासाद्यते, विरोधोदयो यतोऽधरोऽधः, अतएव दूरे, सर्वमनुविधेयं वश्यं यस्येति, असमा स्वच्छन्दा

१ घटाभाववद्भूतलमित्यबाधितविशिष्टप्रतीत्यनुरोधेनाप्यभावस्याधिकरणेन सह सम्बन्ध अवश्यमङ्गीकार्य इत्याह, घटाभावेति ।

२ यस्य परमेश्वरस्य मुखवीक्षणं स्वरूपग्रहः, तत्र विधुरैः बाधितैः, एभिरेव पूर्वमुपन्यस्तैरेव प्रत्यक्षादिभिः योग्यानुपलब्ध्यादिभिः आत्मापि ईश्वराभावबोधप्रयोजकतावच्छेदकवत्वरूप स्वभावोऽपि, नासाद्यते न प्राप्यते विरोधोदय ईश्वराभावबोधोत्पत्तिः यतोऽधरः नोत्पद्यत इत्यर्थः, अतएव दूरे, प्रायः पदं बाहुल्यार्थक तथाचेश्वराभावसाधकानि सर्वाण्येव धर्मिग्राहकमानबाधितानीति भावः । सर्व समग्र जगत अनुविधेय स्वाधीनं यस्य तथाभूत, एकमद्वितीयं, असमा लोकोत्तरा स्वच्छन्दा स्वतन्त्रा लीला सैवोत्सवो यस्य तथाविधं, उद्भवदतिश्रद्धाः उद्भवन्ती अतिश्रद्धा येषाते तथाविधा, वय देवानामपि देव प्रपद्यामहे, श्रवणमननादिभिराराधयामः ।

चेतनान्तराप्रयोज्या या लीला सैवोत्सवो यस्य स तथा, दुःखाभावैकनिदानत्वात्, अतएव उद्भवदतिश्रद्धाः, देवानामपि देवं स्तुत्यं, प्रपद्यामहे ॥ २३ ॥

इति तृतीयस्तबकव्याख्यानम् ॥

---

## चतुर्थः स्तबकः ।

सत्त्वेऽपि तस्याप्रमाणत्वादिति तुरीयविप्रतिपत्तिः[1] ।

ईश्वरो न प्रमाणं तज्ज्ञानस्यागृहीतग्राहित्वाभावेन प्रमात्वाभावात्, ईश्वरस्य प्रमाकर्तृत्व प्रमाकरणत्वञ्च नास्तीति अप्रमाणपुरुषस्य वचः कः श्रद्दध्यादित्यत्राह ।

अप्राप्तेरधिकप्राप्तेरलक्षणमपूर्वदृक् ।
यथार्थोऽनुभवो मानमनपेक्षतयेष्यते ॥ १ ॥

अपूर्वदृक्त्वं अगृहीतग्राहित्वं[2] न प्रमालक्षणं धारावहनबुद्ध्यव्याप्तेः इद रजतमितिभ्रमातिव्याप्तेश्च । स्वमते लक्षणमाह

---

१ इयमत्र विप्रतिपत्तिः ईश्वरः प्रमाणं न वा विधिकोटिरत्र नैयायिकानां, निषेधकोटिर्जैनानाम् ।

२ अगृहीतग्राहित्वञ्च, स्वोत्पत्तिकालीनध्वंसप्रतियोगिस्वसमानाधिकरणज्ञानाविषयविषयकत्वम इदमेव परेषां प्रमाज्ञानलक्षणम् कारिकायां अपूर्वदृगितिपदं भावपर बोध्यम, तथाचापूर्वदृक्त्वमेवागृहीतग्राहित्वम्, अपूर्वस्यागृहीतस्य दृक् दर्शनं ज्ञानं तत्त्वमिति तदर्थः ।

यथार्थ इति । [१] अनपेक्षतयेति स्मृतेः जनकानुभवसमानविषयकतया तत्प्रामाण्याधीनप्रामाण्यकतया सापेक्षत्वात् तत्र न प्रमाव्यवहारस्तान्त्रिकाणामिति ॥ १ ॥

[२] ननु धारावाहिके नाव्याप्तिः, ज्ञानेन हि विषयनिष्ठो धर्मः कश्चिज्जननीयः, अन्यथा ज्ञानस्य विषयं प्रति नियमो न स्यात्[३] तथा च तमादायागृहीतग्राहित्वमेव । [४] किञ्च स धर्मस्तदुपादानज्ञानजन्यो न वा, आद्ये उपादानज्ञानस्य उपादानविषयतानियमार्थे धर्मान्तरस्वीकारे तत्राप्येवमित्यनवस्था, द्वितीये कार्यत्व हेतुः तत्रैव उपादानज्ञानजन्यत्वव्यभिचारीति[५] नेश्वरस्य क्षित्यादिकर्तृतया सिद्धिरित्यत्राह ।

स्वभावनियमाभावादुपकारो हि दुर्घटः ।
सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा ॥ २ ॥

---

१ ननु यथार्थानुभववत् यथार्थस्मृतिरपि कथं न प्रमा स्यात् यथार्थत्वस्यैव तन्त्रत्वात् अनुभवत्वस्य वैयर्थ्यादित्यत आह अनपेक्षितयेति ।

२ भ्रमस्तु न विशिष्टज्ञानं किन्तु धर्मस्मरणं धर्मिणोऽनुभवश्चेति ज्ञानद्वयम्, तत्र धर्मस्मरणं गृहीतग्राहि, धर्म्यनुभवस्य तु प्रमात्वमिष्टमेवेति भ्रमे नातिव्याप्तिरिति धारावाहिकेऽव्याप्तिमुद्धरति, नन्विति ।

३ इदमुपलक्षणं, ज्ञानकर्मत्वमपि विषयाणां नस्यादित्यपि ध्येयम् ।

४ ज्ञानस्य विषयनियमार्थं ज्ञातताख्यो धर्मः अवश्यं नैयायिकैरपि मन्तव्य इत्यभिमन्यमानो भट्ट. क्षिति सकर्तृका कार्यत्वादिति नैयायिकानुमानं दूषयितुमुपक्रमते, किञ्चेति ।

५ क्षितिः सकर्तृका कार्यत्वादित्यत्र, सकर्तृकत्वं उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वं एव च उपादानज्ञानादिमज्जन्यत्वसिद्धौ विशेषणीभूतोपादानज्ञानजन्यत्वस्यापि सिद्धेरुपादानज्ञानजन्यत्वाभाववति ज्ञातत्वे कार्यत्वस्य वर्तमानत्वात् व्यभिचारीति भाव. ।

स्वभावविशेष एव विषयतानियामकः, अन्यथा ज्ञातता धानेऽपि नियमानुपपत्तिः इति स्वभाव एव नियामकस्तत्रेति । किञ्च वर्तमानविषये तदुत्पत्तावपि अविद्यमाने विषये ज्ञातताया उपादानविरहात् अनुत्पत्तौ विषयतानियमानुपपत्तिरिति स्वभाव एव तत्र नियामक इति ॥ २ ॥

(१)'ननु क्रियया कर्मणि किञ्चिज्जननीयमिति व्याप्ते (२) ज्ञानक्रिययाऽपि विषयनिष्ठो धर्मो जननीयः' इत्यत्राह ।

अनैकान्तादसिद्धेर्वा न च लिङ्गमिह क्रिया ।
तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ॥ ३ ॥

क्रिया यदि धात्वर्थस्तदा 'शरेण गगनं युनक्ति'(३) इत्यत्र संयोगेन गगननिष्ठकिञ्चिदजननात् अनैकान्तः, यदि करणव्यापारः क्रिया तदापीन्द्रियसंयोगादिना घटादिनिष्ठकिञ्चिदजननात् व्यभिचारः, अथ क्रिया स्पन्दस्तदा ज्ञानस्य स्पन्दानात्मकत्वादसिद्धिः । (४)' ननु ज्ञातो घटः साक्षात्कृतो घट इत्यादि प्रत्यक्षमेव ज्ञाततायां मानमित्यत्राह तद्वैशिष्ट्येति ।

---

१ अनुमानेन ज्ञाततासिद्धिमाशङ्कते नन्विति ।

२ तथाचायं प्रयोगः, क्रिया कर्मनिष्ठधर्मजनिका क्रियात्वात् ग्रामरूपकर्मनिष्ठसंयोगजनकगमनक्रियावत् इति ।

३ शरेण घट युनक्तीत्यत्र शरसंयोगरूपक्रियाया अवयवविभागरूपफलजनकत्वसम्भवात् गगनपर्यन्तानुसरणं तथाच गगननित्यत्वेन अवयवविभागासम्भव इति भाव ।

४ ज्ञाततारूपधर्मे प्रत्यक्षप्रमाणमाशङ्कते नन्विति ।

सर्वत्र विशिष्टज्ञाने विशेषणविशेष्ये तदुभयसम्बन्धो विषयः, स च सम्बन्धः क्वचित् संयोगादिः क्वचित्तु स्वरूपं, तदिह 'घट ज्ञानम्, इत्यत्रैव घटज्ञानयोः स्वरूप एव सम्बन्धः ज्ञातो घटः इत्यत्रापि भासते, [1]अन्यथा दृष्टो घटः—कृतो घट—इत्यत्र दृष्टताकृततयोरप्यापत्तेः, स्वभावसम्बन्धादुपपत्तिस्तुल्या ॥ ३ ॥

तदुच्यते ।

अर्थेनैव विशेषो हि निराकारतया धियाम् ।
क्रियथैव विशेषो हि व्यवहारेषु कर्मणाम्[2] ॥ ४ ॥

यथा घटादिना ज्ञाने विशिष्टधीः यथा च क्रिययैव कर्मणां घटादीनां व्यवहारेषु विशिष्टबुद्ध्यादिषु विशेषस्तथा ज्ञातो घट इत्यादौ ज्ञानेनैव घटादौ विशिष्टधीर्न धर्मान्तरादिति ॥ ४ ॥

'ननु तथापि नेश्वरज्ञानं प्रमा प्रमाणजन्यत्वाभावात् एवमीश्वरो न प्रमाता न वा प्रमाणं प्रमाकर्तृत्वकरणत्वयो-रभावात्, अत्राह ।

१ ज्ञाततास्वीकारे प्रतिबन्दिमाह, अन्यथेति ।

२ अर्थपदं विषयपरं अत्राभेदे तृतीया, विशेषः व्यावर्तकः विशेषणमिति यावत विषयाभिन्नो व्यावर्तक इति समुदितार्थः, निराकारतयेति निरवयवाना धिया विषयएव व्यावर्तक इति भावः, क्रिययैवेति, अत्र क्रियापदं कृतीच्छा-ज्ञानपरं, अभेदे तृतीया विशेषो व्यावर्तकः, कृतीच्छाज्ञानाभिन्नं विशेषण-मिति यावत, व्यवहारेषु कृतो घटः—ज्ञातो घटः—इत्यादिविशिष्टबुद्धिषु, कर्मणां विषयाणां घटादीनां कृतीच्छाज्ञानादिकमेव विशेषणमिति कारिकार्थः ।

मितिः सम्यक्परिच्छित्तिस्तद्वत्ता[1] च प्रमातृता ।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥ ५ ॥

यथार्थानुभवत्वमेव प्रमात्वमजन्यत्वेऽपीश्वरज्ञानस्याविरुद्धं, प्रमातृत्वं प्रमासमवायित्वं तच्च अकारणत्वेऽपि प्रमाया ईश्वरस्याविरुद्धम् । एवं प्रमया सहायोगव्यवच्छेदेन सम्बन्धितयेश्वरस्य प्रमाणत्वम् न तु करणत्वमपि तत्र नियामकमिति, 'मन्त्रायुर्वेदवत् तत्प्रामाण्यमाप्तप्रामाण्यात्' इति (न्यायसू०२।६८सूत्रे) ईश्वरस्य प्रामाण्यमुक्तम् । न चेश्वरस्य चक्षुरप्रमाणत्वापत्त्या विभागव्याघातः प्रमाकरणाभिप्रायेण विभागसम्भवात् । न चेश्वरज्ञानस्य भ्रमविषयकत्वे भ्रमविषयावगाहित्वेन भ्रमत्वापत्तिरिति वाच्यं व्यधिकरणप्रकारकत्वाभावेनाप्रमात्वाभावात्[2] भ्रमनिष्ठं शुक्तिविशेष्यकत्वं रजतत्वप्रकारकत्वञ्च सदेव तदवगाहितया ईश्वरज्ञानस्य प्रमात्वाच्चेतः ॥ ५ ॥

---

१ तदाश्रयत्वमित्यर्थः, सविषयकार्थकधातुप्रयोगे आश्रयत्वस्यैव कर्तृप्रत्ययार्थत्वात् ।

२ तथाच शुक्ताविदं रजतमिति ज्ञानस्य व्यधिकरणप्रकारत्वेन भ्रमत्वेपि शुक्तौ रजतत्वज्ञानं न भ्रमः प्रमास्थल एव विशिष्टविषयप्रसिध्या विशिष्टविषयोपरागेणैवानुव्यवसाय भ्रमस्थले विशिष्टविषयाप्रसिध्या न तथाऽनुव्यवसाय किन्तु विलक्षणविषयत्वोपरागेणैव, अतएव भ्रान्तिज्ञस्य न भ्रान्तत्वं, एवञ्च ईश्वरज्ञानस्य सर्वविषयकत्वानुरोधेन भ्रमविषयकत्वेपि विषयत्वोपरागेणैव भ्रमविषयकत्वं न तु विषयोपरागेण इति न प्रमात्वव्याघात इति भावः ।

स्तबकार्थसंग्राहकश्लोकमाह ।

साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ
भूतार्थानुभवे निविष्टनिखिलप्रस्ताविवस्तुक्रमः ।
लेशादृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः
शङ्कोन्मेषकलङ्किभिः[1] किमपरैस्तन्मे[2] प्रमाणं शिवः ॥६॥

इति चतुर्थः स्तबकः ।

भूतार्थानुभवे यथार्थानुभवे, साक्षात्कारिणि प्रत्यक्षे, निविष्टो विषयीभूतो निखिलप्रस्ताविवस्तूनां नानापदार्थानां क्रमो यस्य स तथा अनुभवविषयसकलविश्वक इत्यर्थः, नित्ययोगिनि सदातनत्वयुक्ते अतएवेन्द्रियाणां द्वाराणामनपेक्षा स्थितिर्यस्य, लेशतोऽप्यंशतोऽपि अदृष्टिर्विशेषादर्शनं तन्निमित्तिका या दुष्टिः रागद्वेषमोहात्मिका तद्विगमेन प्रभ्रष्टः शङ्कातुषः वेदाप्रामाण्यशङ्कालेशो यस्मादित्यर्थः, प्रमाणं शिवः[3] एवम्भूते तत्राप्रामाण्यशङ्कारूपकलङ्कवद्भिः पाषण्डैः किं कर्त्तव्यमिति भावः ॥ ६ ॥

इति चतुर्थस्तबकव्याख्यानम् ।

---

१ शङ्कोन्मेषेति । शङ्कोन्मेषएव अप्रामाण्यशंकाप्रादुर्भाव एव कलङ्कस्तद्युक्तैः बौद्धादिभिरित्यर्थः ।

२ तन्मे इति । तत् तस्मात् मम हृदिस्थः शिवः सकलप्रवृत्तिनिवृत्तिसमावेशेन प्रमाणमित्यर्थ इति मिश्राः ।

३ एवम्भूते-इति पाठः प्राचीन पुस्तके नास्ति ।

# पञ्चमस्तबकः

'तत्साधकप्रमाणाभावात्' इति पञ्चमविप्रतिपत्तिः[1] 'नन्वीश्वरे साधकप्रमाणमेव नास्ति' इत्यत्राह ।

कार्य्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः ।
वाक्यात् सङ्ख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥ १ ॥

क्षित्यादि सकर्तृकं कार्यत्वात्[2] सकर्तृकत्वञ्च उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वम् । आयोजनं कर्म तच्च सर्गाद्यकालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म चेतनप्रयत्नपूर्वकं कर्मत्वात्[3] अस्मदादिशरीरक्रियावत् । धृतीति ब्रह्माण्डादि पतनप्रतिबन्धकीभूतप्रयत्नवदधिष्ठितं धृतिमत्त्वात् वियति विहङ्गमधृतकाष्ठवत् धृतिश्च गुरुत्ववतां पतनाभावः । धृत्यादेरित्यादिपदात् नाशपरिग्रहः, ब्रह्माण्डादि प्रयत्नवद्विनाश्यं[4] विनाशित्वात् पाट्यमानपटवत् । पदात् पद्यते[5]ऽनेनेति

---

१ विप्रतिपत्तिस्तु क्षितिः सकर्तृका नवेत्येवं रूपा, विधिकोटिरस्माकं निषेधकोटिः परेषाम् ।

२ अत्रानुमाने, स्वरूपसम्बन्धविशेषरूपकार्यत्वस्यैव पक्षतावच्छेदकत्वं प्रागभावप्रतियोगित्वरूपकार्यत्वस्य हेतुत्वं च बोध्यं अवच्छेदावच्छेदेन साध्यसिद्धेरुद्देश्यत्वाच्चांशतः सिद्धसाधनादयो दोषाः ।

३ अत्र कर्मत्वपदेन कार्यारम्भकसंयोगजनककर्मत्वं ग्राह्यम्, अन्यथा, कार्यानारम्भकवाय्वादिकर्मणि व्यभिचारापत्तेः ।

४ प्रयत्नवत्प्रयोज्यनाशप्रतियोगि ।

५ ज्ञायते इत्यर्थः ।

व्युत्पत्त्या पदं व्यवहारः, पटादिसम्प्रदायव्यवहारः स्वतन्त्र-[1] पुरुषप्रयोज्यः व्यवहारत्वात् आधुनिकलिप्यादिव्यवहारवत् । प्रत्ययतः प्रामाण्यात्, वेदजन्यज्ञानं कारणगुणजन्यं प्रमात्वात् प्रत्यक्षादिप्रमावत् । श्रुतेर्वेदात्, वेदः पौरुषेयो[2] वेदत्वात्[3] आयुर्वेदवत् । किञ्च वेदः पौरुषेयो वाक्यत्वात् भारतवत्, वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् अस्मदादिवाक्यवत् । सङ्ख्याविशेषात्[4], द्व्यणुकपरिमाणं सङ्ख्याजन्यं परिमाण-प्रचयाजन्यत्वे सति जन्यपरिमाणत्वात्[5] तुल्यपरिमाणकपालद्वयारब्धघटपरिमाणात् प्रकृष्टतादृशकपालत्रयारब्धघटपरिमाणवत्, अणुपरिमाणञ्च न परिमाणजनकं, नित्यपरिमाणत्वात् अणुपरिमाणत्वाद्वा, एवञ्च सर्गादौ द्व्यणुकपरिमाणहेतुपरमाणुनिष्ठद्वित्वसङ्ख्या च नास्मदाद्यपेक्षाबुद्धिजा, अतस्तदानीन्तनापेक्षा-

---

१ अन्यव्यवहारानधीनव्यवहारकर्तृत्वमत्र स्वातन्त्र्यम्, तथा च सर्गादावितरबाधादीश्वरसिद्धिः ।

२ सजातीयोच्चारणानपेक्षभ्रमादिशून्यपुरुषोच्चारणजन्यः आयुर्वेदस्य संवादिप्रवृत्तिजनकवाक्यार्थज्ञानजनकत्वेन तथाविधपौरुषेयत्वावधारणस्य उभयपक्षसिद्धतया दृष्टान्तत्वम् ।

३ वेदत्वं च, अनुपलभ्यमानमूलान्तरत्वेसति महाजनपरिगृहीतवाक्यत्वम्, मन्वादिवाक्यवारणाय सत्यन्तम् ।

४ संख्याविशेषः–परमाणुगतद्वित्वम् ।

५ संख्याजन्यमिति–परिमाणे प्रचयजन्यपरिमाणे च व्यभिचारवारणाय सत्यन्तम्, नित्यपरमाणुपरिमाणे व्यभिचारवारणाय जन्यत्वम्, घटादौ व्यभिचारवारणाय परिमाणत्वमिति ।

बुद्धिरीश्वरस्यैवेति[१] । विश्वविदव्यय इति विशिष्टस्याव्ययत्वं, तेन नित्यसर्वविषयकज्ञानसिद्धिः ॥ १ ॥

'ननु शरीरविशिष्टस्य कर्तृतया विशेषणबाधात्मको विशिष्टबाध इति[२], कर्तृजन्यत्वव्यापकशरीरजन्यत्वाभावात् कर्तृजन्यत्वाभाव इति सत्प्रतिपक्षता च[३], यद्वा 'कर्ता शरीर्येव, इति व्याप्तिर्विरोधिनी, यद्वा व्याप्त्या यथादर्शनप्रवृत्तया शरीरी कर्ता उपनेयः पक्षधर्मतया च क्षित्यादावशरीरीति विशिष्टसाध्याप्रसिद्धिः विशेषणविशेष्यविरोधश्च, यद्वा शरीरजन्यत्वाद्युपाधिना व्याप्यत्वासिद्धिः इति कार्यत्वहेतौ पञ्च दोषाः' तत्राह ।

न बाधोऽस्योपजीव्यत्वात्, प्रतिबन्धो न दुर्बले ।
सिद्ध्यसिद्ध्योर्विरोधो न, नासिद्धिरनिबन्धना ॥ २ ॥

---

१ अथ परमाणुगतद्वित्वसंख्या नित्यैवास्तु कथं तज्जनकतया ईश्वरीयापेक्षाबुद्धिसिद्धिरितिचेत् परमाणुगतद्वित्वसंख्याया नित्यत्वे, नित्यानेकसमवेतत्वरूपजातिलक्षणापत्त्या गुणत्वव्याघातात् । न च ईश्वरीयापेक्षाबुद्धेः परमाणुगतद्वित्वोत्पादकत्वे परमाणुषु नियतं द्वित्वोत्पत्तिरिति वाच्यम्, सर्गाद्यकालस्य निमित्तान्तरत्वकल्पनेन तद्वारणसम्भवात । न च ईश्वरीयापेक्षाबुद्धेर्नित्यत्वेन परमाणुगतद्वित्वनाशासम्भव इति वाच्यम् शब्दादेरिव परमाणुगतद्वित्वादीनां स्वोत्तरवर्तिसमानाधिकरणगुणान्तरस्य नाशकत्वकल्पनात् ॥

२ तथाचात्र, ईश्वरो न कर्ता शरीराभावादित्येवरूपमनुमानं फलितम् अतएवोक्तं शरीरविशिष्टस्य कर्तृतयेति ।

३ अत्रापि, क्षितिरकर्तृका शरीराजन्यत्वादिति विपरीतकोटिसाधकानुमानेन सत्प्रतिपक्ष इति फलितार्थः ।

ईश्वरे धर्मिणि शरीरबाधात् कर्तृत्वबाधो न, अधिकरण-ज्ञानं विना अभावज्ञानासम्भवात् अस्य कार्यत्वस्य धर्मिसाधकस्य अधिकरणज्ञानजनकतया अवश्यापेक्षणीयत्वेन बलवत्वात, एवञ्च न विशेषणबाधात्मको विशिष्टबाधः प्रत्यक्षात्मक इति, ईश्वरो न कर्ता अशरीरत्वात् इत्यनुमानबाधोऽपि नेत्यर्थः[१]। क्षित्यादि न सकर्तृक शरीराजन्यत्वात् इति न प्रतिबन्धक, सत्प्रतिपक्ष-हेतोः शरीराशवैयर्थ्यात् व्याप्यत्वासिद्धा दुर्बलत्वात्[२]। तृतीयेऽपि कार्यत्वव्याप्तेः[३] पक्षधर्मत्वसहकारात् विपक्षबाध-कतर्कावताराच्च[४] बलवत्वम्, उपन्यस्तायाः कर्ता शरीर्येव' इति व्याप्तेर्दुर्बलतया न प्रतिबन्धः। [५]चतुर्थे च यदि पक्षधर्मतया अशरीरी उपस्थितस्तदा न विरोधः,[६]कर्तृत्वस्याशरीरित्वसमाना-

---

१ अनुमानेऽपि परामर्शार्थे अधिकरणज्ञानस्यापेक्षणीयत्वेन उक्तानु-मानस्याप्रसिद्धत्वान्नबाधकत्वमिति भाव.।

२ प्रकृतसाध्याभावासाधकत्वादित्यर्थः।

३ कार्यत्वनिष्ठसकर्तृकत्वव्याप्ते ।

४ विपक्षस्य, साध्याभाववद्वृत्तित्वस्य बाधको यस्तर्कः, कार्यत्वं यदि सकर्तृकत्वव्यभिचारि स्यात् कर्तृजन्यतावच्छेदकं न स्यादित्येवंरूपः तदवतारात् तेन व्यभिचारसंशयनिवर्तनादित्यर्थः।

५ सिध्यसिध्यो रित्यशं विवृणोति, चतुर्थेचेति।

६ कर्तृत्वस्येति—कर्तृत्वस्याशरीरित्वसामानाधिकरण्ये पलब्धौ कुत्र चित्कर्तरि अशरीरित्वसिध्या कर्तृत्वे शरीरित्वव्याप्यत्वव्याघातेन तादृश-व्याप्तिबलेन कर्तृमात्रे शरीरित्वमुपनेयमित्यसिद्धमिति भावः।

धिकरणव्योपलम्भात् तदनुपस्थापने तु न विरोधः विरोधाश्रयस्यासिद्धेः, । पञ्चमे च विपक्षबाधकतर्कसत्वात् तदभावनिबन्धना अज्ञानरूपाऽसिद्धिर्व्याप्यत्वासिद्धिर्वा न, शरीरजन्यत्वोपाधेरपि विपक्षबाधकाभावेनापास्तत्वात्[1] ॥ २ ॥

ननु यदीश्वरः कर्ता स्यात्, शरीरी स्यादिति प्रतिकूलतर्कावतारोऽनुकूलतर्काभावश्च' तत्राह ।

तर्काभासतयाऽन्येषां[2] , तर्काशुद्धिरदूषणम्[3] ।
अनुकूलस्तु तर्कोऽत्र कार्यलोपो विभूषणम् ॥ ३ ॥

प्रतिकूलतर्कास्तावदीश्वरासिद्धा आश्रयासिद्धा इत्याभासाः । कर्तारं विना कार्यं न स्यादिति तर्कस्तु विभूषणम् उपकारकः ।

'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते' ( गीता० ) इत्यागमश्च ।

[4]आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः, ॥ (मनु० अ० १२)

---

१ विपक्षबाधकाभावेन यद्यत्सकर्तृकं तत्तत शरीरजन्यमित्यत्र व्यभिचारसंशयनिरासकानुकूलतर्काभावेन अपास्तत्वात् उपाधित्वाभावात ।

२ प्रतिकूलतर्काणां, बहुवचनस्वारस्यात ईश्वरो यदि कर्ता स्यात् प्रयोजनवान स्यात्, अथवा दुःखी स्यादित्यादितर्कपरिग्रह. ।

३ तर्कात् प्रतिकूलतर्कात् अशुद्धि ईश्वरासिद्धिः, अदूषणं न दोष इत्यर्थं ।

४ नन्वीश्वरस्य कर्तृत्वाभावसाधकागमस्यापि सत्वात्कथमस्यागमस्य प्रमाण्यमित्यत आह आर्षमित्यादीति ।

इति तर्कानुगृहीतस्यागमस्य बलवत्त्वम् ॥ ३ ॥

[1]'ननु कार्यत्वं प्रयत्नजन्यत्वेऽप्रयोजकम्, अत्राह ।

स्वातन्त्र्ये जडताहानिः, नादृष्टं दृष्टघातकम् ।
हेत्वभावे फलाभावः, विशेषस्तु विशेषवान्[2] ॥ ४ ॥

न हि कर्तारं हेतुं विना कार्यम् । परमाणोरेव यत्नवत्त्वेऽचैतन्यानुपपत्तिः, अचेतनस्य चेतनप्रेरितस्यैव जनकत्वात् । अदृष्टमपि दृष्टकारणसहकारेणैव फलजनकम् । न च चेष्टायामेव भोक्तृप्रयत्नो हेतुः न तु क्रियासामान्ये इति चेष्टाया विशेषप्रयत्नस्य हेतुत्वेऽपि क्रियासामान्ये प्रयत्नसामान्यस्य कारणत्वानपायात् । अन्यथा बीजविशेषस्याङ्कुरविशेषे जनकत्वेनाङ्कुरसामान्यं प्रति बीजत्वेन हेतुताया अपि विलोपापत्तेः ॥ ४ ॥

[3]'ननु धृत्यादीनां प्रयत्नजन्यत्वे किं मानम्' इति अत्राह ।

कार्य्यत्वान्निरुपाधित्वमेवं धृतिविनाशयोः ।
विच्छेदेन पदस्यापि[4] प्रत्ययादेश्च पूर्ववत् ॥ ५ ॥

---

१ द्व्यणुकादिप्रयोजककर्महेतुभूतप्रयत्नाश्रयत्वेनेश्वरसिद्धिरिति यत्प्रागभिहितं तत्राप्रयोजकत्वमाशङ्कते, नन्विति ।

२ चेष्टात्मकक्रियाविशेषः भोक्तृप्रयत्नजन्यत्वरूपविशेषधर्मवान्, तथा च यद्विशेषयोरितिन्यायात् सामान्यतः क्रियात्वावच्छिन्ने सामान्यतः प्रयत्नत्वेन हेतुत्वसिद्धिरिति भाव. ।

३ ब्रह्माण्डं प्रयत्नप्रतिरुद्धपतनं धृतिमत्त्वात्, ब्रह्माण्डनाशः प्रयत्नजन्यः नाशत्वात्, इत्यादावनुकूलतर्कं दर्शयितुं शङ्कते, नन्वित्यादिना ।

४ अव्यभिचारित्वम् ।

धृतिविनाशयोः प्रयत्नजन्यत्वान्निरुपाधित्वम्[१] । विच्छेदे-नान्तरायप्रलयेन आदर्शाद्यभावात् अर्वाग्दर्शी नाद्यव्यवहारमूलं, व्यवहारानभिज्ञत्वादिति सर्गाद्यकालीनघटादिव्यवहारप्रवर्त्तकः पुरुषः सिध्यति । एवं प्रत्ययादेर्वेदजन्यधीप्रामाण्यादेरपि निरुपाधित्वम् ।

[२] अथवा कार्येत्यादिकं [ १ का० ] अन्यथा व्याख्यायते, कार्यं तात्पर्यं[३] तात्पर्यविषय एव शब्दप्रामाण्यमिति तात्पर्यं हि यस्य वेदे स एवेश्वरः । आयोजनं व्याख्यानं, वेदास्तदर्थ-विद्व्याख्याताः महाजनपरिगृहीतवाक्यत्वात्, अव्याख्यातत्वे पदार्थानवगमेऽननुष्ठानापत्तेः, एकदेशदर्शिनश्च[४] व्याख्यायां नाश्वासः । एवं धृतिर्धारणं, धृत्यादेरित्यादिग्रहणात् अनुष्ठानसङ्ग्रहः । एवमीश्वरादिपदार्थतया ईश्वरसिद्धिः[५] तदुक्तम्—

'उद्देश एव तात्पर्यं व्याख्या विश्वदृशः सती ।
ईश्वरादिपदं सार्थं, लोकवृत्तानुसारतः ॥'

---

१ अत्रापि कार्यत्वान्निरुपाधित्वमिति पूर्वेणाभिसम्बन्धः ।

२ वेदप्रामाण्याभ्युपगन्तृमीमांसकं प्रति परमेश्वरस्वीकाराय कार्यायोजनेत्यादिकारिकामन्यथा व्याचिख्यासुः प्रतिजानीते, अथवेति ।

३ तदेव परं उद्देश्यं यस्येति व्युत्पत्त्या यदुद्देशेन यः शब्दः प्रयुज्यते स तत्परस्तस्य भावस्तात्पर्यं तच्च इच्छाविशेषः ।

४ वेदैकदेशदर्शिनः असर्वज्ञस्येत्यर्थः ।

५ तथाचायं प्रयोगः—ईश्वरपदं जगदुत्पादककर्तृपरं तत्त्वेन वेदबोधितत्वात्, तथा च श्रुतिः "यतो वा इमानि भूतानि जायन्ते" इत्यादिः ।

उद्दिश इच्छाविशेषः, एव, 'अहं सर्वस्य प्रभवः' इत्यादावह पदं स्वतन्त्रोच्चारयितृपरं, लोकस्यले मतात्पर्यकशब्दस्यैव प्रमाणत्वात् 'य एव लौकिकास्त एव वैदिकाः'' इति लौकिकाहमादिपदवदलौकिकेऽपोयमेव व्यवस्था । प्रत्ययतः विधिप्रत्ययात्, आप्ताभिप्रायो विध्यर्थः, यस्याभिप्रायः, स एवेश्वरः॥५॥

(१)प्रवृत्तिः कृतिरेवात्र, सा चेच्छातः, यतश्च सा ।

तज्ज्ञान, विषयस्तस्य विधिस्तज्ज्ञापकोऽथ वा ॥ ६ ॥

विधिजन्यज्ञानात् प्रवृत्तिर्दृश्यते, सा च इच्छातश्चिकीर्षातः(२) चिकीर्षा च कृतिसाध्यत्वेष्टसाधनताज्ञानात् तज्ज्ञानस्य विषयः कार्यत्व इष्टसाधनत्वञ्च विधिरिति प्राचां मत, स्वमतमाह तज्ज्ञापकोऽथ वेति । इष्टसाधनत्वानुमापक आप्ताभिप्रायो विधिप्रत्ययार्थः(३) ॥ ६ ॥

प्रवृत्तिप्रयोजकेच्छाहेतुज्ञानविषयं परिशेषयति ।

इष्टहानेरनिष्टाप्ते(४)रप्रवृत्तेर्विरोधतः ।

असत्त्वात् प्रत्ययत्यागात् कर्तृधर्मो न सङ्करात् ॥ ७ ॥

स्पन्दस्य कर्तृधर्मस्य प्रवृत्तिप्रयोजकत्वे 'आत्मानं विजानीयात्' इत्यत्राप्रवृत्तिप्रसङ्गात्, ग्रामं गच्छतीत्यतः प्रवृत्त्या-

---

१ आप्ताभिप्राय विध्यर्थं वक्तुं प्रथमं परमतमुपन्यस्य स्वमत व्यवस्थापयति प्रवृत्तिः कृतिरिति ।

२ इदं कृत्वा साधयामीत्येवरूपकृतिसाध्यत्वप्रकारकेच्छातः इत्यर्थः ।

३ तथाचेष्टसाधनत्वस्यान्यलभ्यत्वेन न विध्यर्थत्व अनन्यलभ्यः शब्दार्थ इति नियमात् ।

४ अव्याप्त्यतिव्याप्तिभ्यामित्यर्थः ।

पत्तेश्च । यत्नस्य विधित्वे दोषमाह अप्रवृत्तेः, आख्यातान्तरेण यत्ने बोधितेऽपीष्टसाधनत्वाप्रतिसन्धाने अनिष्टसाधनत्वज्ञाने वाऽप्रवृत्ते. । इच्छाया विधित्वे दोषमाह विरोधन इति । इच्छाया विधित्वे इच्छयैव तज्ज्ञानं जननीयम्, इच्छाया ज्ञानेन चेच्छा जननीया इत्यन्योन्याश्रयः, तदिदमुक्त विरोधन इति । ननु 'इच्छाज्ञान लिङा जननीय इति अत्राह असत्वादिति । इच्छाज्ञाने जाते प्रवृत्तिहेतुस्वरूपसदिच्छाभावात् प्रवृत्तिर्न स्यात्, इच्छायाः स्वरूपसत्या एव प्रवृत्तिहेतुत्वात्, न च लिङ्श्रवणकाले इच्छा स्वरूपसतीत्यर्थः । 'ननु लिङेव इच्छा-जनिका' इत्यत्राह प्रत्ययत्यागादिति । इच्छाकारणत्वेन गृहीतस्य प्रत्ययस्य ज्ञानस्य कारणस्य त्यागापत्ते. व्यभिचारा-दित्यर्थः [१] । 'लिङ्श्रुतिकाले सुखादिप्रकारकधीजन्येच्छा लिडर्थः' इत्यत्राह सङ्करादिति । इष्टसाधनताज्ञानस्य उपायेच्छाहेतोरवश्य स्वीकारात्, तत्र च कारणान्तराभावात् लिङ्पदमेव कारणम्, अतः फलेच्छाज्ञान न प्रवृत्तिहेतुः, तद्विनापि प्रवृत्तिसम्भवात्, तथाच सङ्करात् इष्टसाधनत्वज्ञानरूप-साधनसहचारत्वात् इच्छाज्ञानस्येच्छाजनकत्वे मानाभावेन तस्य लिङ्पदजन्यत्वे मानाभावाच्चेति ॥ ७ ॥

'ननु यत्नज्ञानमेव प्रवर्त्तकमस्तु' आख्यातान्तरञ्च [२] न

---

१ लिङ विनापीऽच्छोत्पत्तेश्च ।

२ लडादिकश्चेत्यर्थ, तथाच ग्राम गच्छतीति वाक्यस्य यत्नबोधक-त्वान्न प्रवर्तकत्वमित्यर्थः ।

यत्नवाचकम्, अनुकूलव्यापारमात्र एव आख्यातशक्तेः, रथो गच्छतीत्यादौ तथाकल्पनात् तत्राह ।

कृताकृतविभागेन कर्तृरूपव्यवस्थया ।
यत्न एव कृतिः, पूर्वा परस्मिन् सैव भावना[१] ॥८॥

घटः कृतोऽङ्कुरो न कृत इति व्यवहारात् कुलालादिः कर्त्ता न कारकान्तरमिति कृञ्धात्वर्थः कृतिः[२] । 'ननु यत्नपदपर्य्यायता स्यात्, अत आह पूर्वेति। परस्मिन्नुत्तरकालवर्त्तिनि फले विद्यमाने, सैव कृतिरेव, पूर्वा साधनीभूता, भावना, फलानुकूलतापन्नयत्नएवाख्यातार्थः । यद्वा फलानुकूलव्यापारधात्वर्थप्रत्ययजनिका पूर्वापरस्मिन् पूर्वापरीभूतत्वे सति, कृतिराख्यातार्थः, तथा च प्रयत्नवत्त्वमनुकूलत्वं पूर्वापरीभूतत्वमिति त्रयमर्थः[३] ॥८॥

'ननु धातुना यत्नः प्रतीयते, आख्यातस्य च अनुकूलव्यापारमात्रार्थकत्वम्, आक्षेपादेव च यत्नलाभः' इत्यत आह ।

भावनैव हि यत्नात्मा सर्वाख्यातस्य गोचरः[४] ।
तया विवरणध्रौव्यादाक्षेपानुपपत्तितः ॥ ९ ॥

---

१ भाव्यते फलमनयेति व्युत्पत्त्येत्यर्थः । सैव भावना आख्यातवाच्येत्यर्थः ।

२ तथाच क्रियाजन्यत्वाविशेषेऽपि यत्नजन्यत्वप्रतिसन्धानाप्रतिसन्धानाभ्यामेव घटाङ्कुरयोः कृताकृतव्यवहारात् कुलालादिरेव कर्त्तेत्यर्थः ।

३ तथाच समुदिते प्रवृत्तं पद तदेकदेशेऽपि प्रयुज्यते विशुद्धिमात्रं पुरस्कृत्य ब्राह्मणे श्रोत्रियपदवत् ।

४ सर्वाख्यातजन्यप्रतीतिविषय इत्यर्थः ।

तया कृत्या तद्वाचकपदेन, पचति पाकं करोतीति विवरणात् तत्र शक्तिः, अनुकूलव्यापारस्य यत्नानाक्षेपकत्वात्, वर्त्तमानपाकानुकूलव्यापारस्याचेतनेऽपि भावात्[1] । [2] ओदनमिति कर्मपदोत्तरं पचति भुङ्क्ते वेति जिज्ञासा च कर्मणः कृतिव्याप्यत्वप्रतिसन्धानेन यथा—पचतीत्यनन्तरं कर्मादौ जिज्ञासा ॥ ९ ॥

'ननु कर्त्तुरपि विवरणात्[3] तत्रापि शक्तिराख्यातस्य स्यात्', तत्राह ।

आक्षेपलभ्ये संख्येये नाभिधानस्य कल्पना ।

संख्येयमात्रलाभे तु साकाङ्क्षा व्यवस्थितिः[4] ॥ १० ॥

आख्यातवाच्यया संख्यया आश्रयस्य आक्षेपादेव लाभान्न कर्त्तरि शक्तिकल्पना, प्रथमान्तपदोपस्थाप्यत्वे सति आख्यातार्थविशेष्यत्वमाक्षेपलभ्यत्वं, भुक्त्वा इत्यादौ क्त्वान्तार्थानन्तर्यवार-

---

१ काष्ठादावपि पाकानुकूलव्यापारस्य सत्वादित्यर्थः ।

२ ननु आख्यातस्य यत्नार्थकत्वे ओदनमिति कर्मपदोत्तरं पचति भुङ्क्ते वेत्याख्यातार्थविशेषजिज्ञासा न संभवति विशेषजिज्ञासां प्रति सामान्यज्ञानस्य हेतुतया कर्मपदस्य यत्नसामान्यानुपस्थापकत्वात्, आख्यातस्य व्यापारार्थकत्वे च कर्मपदस्य परसमवेतव्यापारसामान्योपस्थितौ व्यापारविशेषजिज्ञासासम्भवादित्याशङ्कामपनेतुमाह ओदनमितीति ।

३ पचतीत्यस्य पाकयत्नवानिति विवरणादित्यर्थः ।

४ तथाच यत्र भावनान्वयस्तत्रैव संख्यान्वयनियमात् कर्तृविहिताख्यातोपस्थाप्यसंख्याया कर्त्तरि, कर्मविहिताख्यातोपस्थाप्यसंख्याया कर्मणि चान्वय इति समुदितकारिकातात्पर्यार्थः ।

णाय विशेष्यदलम्, सुप्यते इत्यादौ वर्त्तमानत्वविशेष्यत्वं स्वाप-
व्यापीति सत्यन्तदलम्। [1] चैत्रस्तण्डुलं पचतीत्यत्र द्वितीयार्थ-
कर्मतावरुद्धत्वात् तण्डुलस्य, न तत्र भावनाऽऽकाङ्क्षेति भावना
शुद्धप्रातिपदिकार्थान्वयिनी, अतएव 'यं यं भावनाऽन्वेति तं त
मङ्क्वाऽपि' इति एकपदोपात्तभावनान्वयबलात्, कर्त्रादिसंख्या-
भिधान एव च प्रथमेति। एवं कर्मापि नाख्यातपदवाच्यम् ॥१०॥

'नन्वस्तु कर्मधर्मो [2] विधिः', तत्राह।

अतिप्रसङ्गान्न फलं, नापूर्वं तत्त्वहानितः।

तदलाभान्न कार्यञ्च, न क्रियाऽप्यप्रवृत्तितः॥ ११॥

कर्म स्वर्गादि, तद्धर्मः कार्यत्वं यदि विध्यर्थः, तत्राह, [3]अतिप्रसङ्गान्न फलम्। स्वर्गे कार्यत्वज्ञाने सति स्वर्गासाध-
नेऽपि प्रवृत्त्यापत्तेः। [4]यदि कर्म अपूर्वं, तद्धर्मः कार्यत्वं
विध्यर्थस्तत्राह, नापूर्वं तत्त्वहानितः। शाब्दबोधात् पूर्वं नोप-
स्थितमित्यतएवापूर्वं, पूर्वमुपस्थितौ च न तत्त्वम्, अनुपस्थितौ
च कथं तत्र शक्तिधीः। 'ननु कार्यत्वरूपेण शक्तिधीः, शाब्दबोधे

---

१ नन्वेवं चैत्रः पचतीत्यादावव्यतिरिक्तत्वाभावात् कथन्तस्य प्रथमेत्यत आह चैत्र इति।

२ कर्मणां स्वर्गादीनां धर्मः कार्यत्वं विध्यर्थ इत्यर्थः, तथा च क्रियत इति व्युत्पत्त्या कर्मपदेन यदि फलं स्वर्गाद्युच्यते तन्निष्ठं कार्यत्वज्ञानं प्रवर्तकं, अथवा कर्मपदेन स्वर्गसाधनापूर्वं तन्निष्ठकार्यत्वज्ञानं प्रवर्त्तकं, अथवा कर्मपदेन अपूर्वसाधनयागादिकं तन्निष्ठकार्यत्वज्ञानं प्रवर्तकं।

३ आद्ये दोषमाह—अतिप्रसङ्गादिति।

४ द्वितीये दोषमाह—यदीति।

तु योग्यतया अपूर्वस्य कार्यविशेषस्य भान', तत्राह, तदलाभाच्च कार्यत्वेति । नित्यनिषेधापूर्वयोरलाभप्रसङ्गात्, तत्र फलकामस्य नियोज्यस्याभावात् । यद्वा 'ननु कार्यत्वेनोपलक्षितायामपूर्वव्यक्तौ शक्तिग्रहः, गन्धवत्त्वेनोपलक्षिताया पृथिवीत्वविशिष्टाया व्यक्तौ पृथिवीपदस्येव, इत्यत्राह तदलाभात् । अपूर्वत्वविशिष्टापूर्वव्यक्त्यनुपस्थितेः, गन्धवत्त्वेनापि हि पृथिवीत्वविशिष्टस्य स्मरणमनुमान वा सम्भवति, प्रागनुभवात्, प्रकृते तथात्वेऽपूर्वत्वव्याघातादित्यर्थः । [१] 'ननु कर्म यागादि. तद्धर्मः कार्यत्वं विधिः', तत्राह, न क्रियापीति । अनिष्टसाधनताधीकाले प्रवृत्त्यदर्शनात् । अत्र अपिना नापूर्वमपि, उक्तदोषादित्यर्थः ॥ ११ ॥

[२] 'ननु करणं शब्दः, तद्धर्मोऽभिधा[३], तज्ज्ञान प्रवर्तकम्', अत एवाहुः "अभिधां भावनामाहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः", अभिधा यागप्रवर्तिका इति धीः शब्दात्, आख्यातार्थश्च उत्पादना उत्पत्त्यनुकूलकृतिरूपेयमित्यत्राह ।

[४]असत्त्वादप्रवृत्तेश्च नाभिधाऽपि गरीयसी ।
बाधकस्य समानत्वात् परिशेषोऽपि दुर्लभः ॥ १२ ॥

---

१ तृतीयकल्पमाशङ्क्य निषेधति नन्वित्यादिना ।

२ भट्टमतमाशङ्क्य निषेधति नन्वित्यादिना ।

३ शब्दनिष्ठव्यापारविशेष इत्यर्थः ।

४ पराभिमतशब्दधर्मस्वरूपाभिधाया मानाभावादित्याह—असत्वादिति सुबोधमन्यत्सर्वं ।

अभिधाया मानाभावात्, अभिधा शब्दोऽभिधाज्ञानेऽपि अप्रवृत्तेः, गरीयसी उचिता लिङर्थतयेति शेषः । 'ननु अन्यस्य लिङर्थत्वे बाधात् परिशेषेणाभिधा लिङर्थः' इति, अत्राह बाधकस्येति । प्रकृतेऽपि बाधकासम्भवात् ॥ १२ ॥

(१) 'ननु करणस्य यागादेर्धर्मे इष्टसाधनत्वं विध्यर्थोऽस्तु' तत्राह ।

हेतुत्वादनुमानाच्च मध्यमादौ वियोगतः ।
अन्यत्र क्लृप्तसामर्थ्यान्निषेधानुपपत्तितः ॥ १३ ॥

विध्यर्थस्य इष्टसाधनताया 'हेतुत्वात्' लिङ्गतयोपस्थानात्, न च स्वस्य स्वलिङ्गत्वमिति(२) अग्निकामो दारुणी मथ्नीयादित्युक्ते कुत इत्याकाङ्क्षायां वक्तारो वदन्ति यतो दारुद्वयमथनमग्निसाधनमिति । 'अनुमानात्' अर्थवादादिष्टसाधनताबोधानन्तरमपि विधेरनुमानात् । यदि तादृशेनापि विधिना इष्टसाधनत्वमेव बोध्यम्, तदा तदनुमानवैयर्थ्यम्, 'तरति मृत्युं, तरति ब्रह्महत्याम्' इत्यादौ मृत्युब्रह्महत्यातरणकामोऽश्वमेधेन यजेतेति विध्यनुमानस्य सर्वतन्त्रसिद्धत्वात् । 'मध्यमादौ वियोगतः' मध्यमोत्तमपुरुषे लिङ इष्टसाधनतावियोगात्, कुर्याः कुर्यामित्यत्राज्ञादिकं प्रतीयते, आज्ञा तु अभिप्राय एव इति

---

१ प्राचीननैयायिकमतमाशङ्क्य निषेधति नन्वित्यादिना ।

२ तथा च विध्यर्थस्य इष्टसाधनतारूपत्वे साध्यहेत्वोरविशेषेण इष्टसाधनत्वानुमापकत्वासम्भवः, आप्ताभिप्रायस्य विध्यर्थत्वे तु दारुद्वयमथनं इष्टसाधनं आप्ताभिप्रायविषयत्वादित्यनुमानं सम्भवत्येवेति भावः ।

प्रथमपुरुषेऽपि इच्छैवार्थः । 'अन्यत्र क्लृप्तसामर्थ्यात्' अध्येषणादिलिङाम् इच्छावाचकत्वकल्पनात् । 'निषेधानुपपत्तितः' 'न कलञ्जं भक्षयेत्' इत्यत्रेष्टसाधनत्वनिषेधस्य बाधितत्वात् । (१) बलवदनिष्टाननुबन्धित्वञ्च न विध्यर्थः, 'श्येनेनाभिचरन् यजेत' इत्यादौ असम्भवात्(२) ॥ अप्रवर्त्तमानपुरुषस्य च बलवद्द्वेषविषयत्वात् बलवद्द्वेषविषयदुःखजनकत्वसामान्याभावस्य बाधितत्वादिति ॥ १३ ॥

(३)स्वमतमाह ।

विधिर्वक्तुरभिप्रायः प्रवृत्यादौ(४) लिङादिभिः ।

अभिधेयोऽनुमेया तु कर्त्तुरिष्टाभ्युपायता ॥ १४ ॥

प्रवृत्तिनिवृत्तिविषये आप्ताभिप्रायः लिङादिभिः प्रत्ययैरभिधेयः, इष्टसाधनता त्वनुमेया(५) । (६)वस्तुतस्तु ईश्वरे-

---

१ ननु बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वमेव विध्यर्थः तदभावस्तु न कलञ्जभक्षणे बाधित इत्याशक्य निषेधति बलवदित्यादि ।

२ तथा च श्येनस्य शत्रुवधद्वारा नरकोत्पादकत्वेन बलवदनिष्टाननुबन्धित्वासम्भवादिति भाव ।

३ कर्मादिधर्मस्य विध्यर्थत्व निरस्य परिशेषेण प्रयोक्तृधर्मस्याप्ताभिप्रायस्य विध्यर्थत्वं व्यवस्थापयति स्वमतमाहेति ।

४ प्रवृत्यादावित्यादिपदेन निवृत्तिपरिग्रह', सप्तम्यर्थ उद्देश्यत्वं तथा च प्रवृत्तिनिवृत्युद्देश्यकवक्त्रभिप्रायो विध्यर्थ इत्यर्थः ।

५ अयमनुमानप्रकार'—याग. स्वर्गकामस्य मम बलवदनिष्टाननुबन्धीष्टसाधन मत्कृतिसाध्यतया प्रेप्यमाणत्वात् मन्मात्रकृतिसाध्यतयेष्यमाणमद्भोजनवदिति ।

६ आचार्यमतेऽस्वरस दर्शयति वस्तुतस्त्विति ।

च्छाया सर्वविषयकत्वात् निषेधे बाधः[1], बलवदनिष्टाननुबन्धित्वेनेच्छायाः शक्यत्वे गौरवमिति प्राचीनमतमेव साधीयः ॥ १४ ॥

श्रुतेरित्यस्य व्याख्यान्तरमाह ।

कृत्स्न एव च वेदोऽयं परमेश्वरगोचरः ।
स्वार्थद्वारैव तात्पर्यं तस्य स्वर्गादिवद्विधौ ॥ १५ ॥

सर्वत्र वेदभागे ईश्वरः प्रतिपादितः 'यज्ञो वै विष्णुः' ( तै० स० ) 'पश्यत्यचक्षुः' ( श्वे० उ० ) इत्यादिश्रुतिषु 'एतस्य वा अक्षरस्य प्रशासने गार्गि ! द्यावापृथिव्यौ विधृते तिष्ठतः,' ( बृहदा० ) इत्यादिषु च, न तु सिद्धार्थतया अमीषामन्यत्र तात्पर्यं, यथा स्वर्गनरकादिबोधकानां, तथा 'ईश्वरमुपासीत' इति विध्येकवाक्यतया तेषां त्वन्मतेऽपि प्रामाण्यमेव, अन्यथा स्वर्गादिपदानामपि स्वार्थे प्रामाण्य न स्यात्, तदेतदुक्तं स्वार्थद्वारैवेति । स्वार्थप्रतिपादनद्वारा एव विधौ सिद्धार्थतात्पर्यात् । [2]वाक्यात्, वैदिकप्रशंसानिन्दावाक्यानि प्रशंसानिन्दाज्ञानपूर्वकाणि प्रशंसानिन्दावादवाक्यत्वात् पारिकल्पितसुरसमाप्तकर्तास्मीत्यादिवत् ॥ १५ ॥

१ आप्तेच्छाविषयत्वस्येश्वरेच्छाविषयत्वरूपस्य केवलान्वयित्वेन, कलञ्जभक्षणेऽपि सत्त्वात् बाध इत्यर्थः ।

२ वाक्यादित्यस्य व्याख्यान्तरमाह आक्षरादीति तथाच स्वर्गनरकादिप्रशंसानिन्दाज्ञानं च अस्मदादीनां असम्भवतीत्यस्मदादिबाधादीश्वरसिद्धिः ।

संख्याविशेषादित्यस्य व्याख्यान्तरमाह ।

स्यामभूवं भविष्यामीत्यादौ संख्या प्रवक्तृगा[१] ।
[२] समाख्याऽपि च शाखानां नाद्यप्रवचनादृते[३] ॥ १६ ॥

वैदिकोत्तमपुरुषेण स्वतन्त्रोच्चारयितुः संख्या वाच्या, 'तत् ऐक्षत एकोऽहं बहु स्याम्' ( छान्दो० ) इत्यादिबहुषु उत्तमपुरुषश्रुतेः । संख्यापदार्थमन्यमाह समाख्येत्यादि । सर्वासां शाखानां हि काठककालापकाद्याः समाख्याः संज्ञाविशेषाः श्रूयन्ते, ते च नाध्ययनमात्रनिबन्धनाः, अध्येतॄणामानन्त्यात्[४] आदावन्यैरपि तदध्ययनात्, तस्मादतीन्द्रियार्थदर्शी भगवानेव कारुणिकः सर्गादावस्मदाद्यदृष्टाकृष्टकाठकादिशरीरविशेषमधिष्ठाय यां शाखामुक्तवान् तस्याः शाखायास्तन्नाम्ना व्यपदेश इति सिद्धमीश्वरमननं मोक्षहेतुः ॥ १६ ॥

---

१ स्वतन्त्रोच्चारयितृगता ।

२ संख्यायते कथ्यते अनयेति व्युत्पत्त्या, संख्यापदस्य संज्ञार्थकत्वमाह समाख्यापिचेति ।

३ आद्ये सर्गादौ प्रवचनादृते कस्यचिदतीन्द्रियार्थदर्शिन उक्तिं विना, न सम्भवतीति भावः ।

४ तथा च कठादिसंज्ञानामध्ययनमात्राधीनत्वे, अध्येतॄणामानन्त्येन संज्ञाया अनन्तत्वापत्तिरित्यर्थः । अयमत्र संग्रहः-वैदिकोत्तमपुरुषाः स्वतन्त्रोच्चारयितृसंख्यावाचकाः, उत्तमपुरुषत्वात् लौकिकोत्तमपुरुषवत् तथा चानेनानुमानेन अस्मदाद्याश्रितसंख्यावाचकत्वबाधादीश्वरसिद्धिः, संख्यापदस्य संज्ञापरत्वे प्रयोगस्तु-वेदशाखानां कठकालापादिसंज्ञा पुरुषोक्त्यधीना संज्ञात्वात्, आधुनिकसंज्ञावत्; तथा चैतादृशसंज्ञायां अतीन्द्रियार्थदर्शनसामर्थ्यपुरुषोक्त्यधीनत्वबाधादतीन्द्रियार्थदर्शिपरमेश्वरसिद्धिः ।

यस्येश्वरे न विश्वासस्तं प्रत्याह ।

इत्थेवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः(१)।
किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक ! त्वयैव कृपया ते तारणीया नराः ॥१७॥

इतिशब्दः स्वरूपे, एवंशब्दः प्रकारार्थे, शैलसारः लोह(२) अतिकठिनशिला वा । प्रस्तुते ईश्वरे विप्रतीपविधयः प्रतिकूलपराः, तादृशा अपि उच्चैरतिशयेन काले भवच्चिन्तकाः, शङ्काकलङ्कशून्याः कार्य्याः ॥ १७ ॥

अस्माकन्तु निसर्गसुन्दर चिराच्चेतो निमग्नं त्वयि
त्वय्यद्धाऽऽनन्दनिधौ तथापि तरलं नाद्यापि सन्तृप्यते ।
तन्नाथ ! त्वरितं विधेहि करुणां येन त्वदेकाग्रतां
याते चेतसि नाप्नुवाम शतशो याम्याः पुनर्यातनाः ॥१८॥

अद्धा तत्त्वं, सन्तृप्यत इति कर्मकर्त्तरि ॥ १८ ॥

---

१ इति अनेन यथोक्तप्रकारेण श्रुतिराम्नायो नीतिः न्यायः, तयोः संप्लवः परस्पराविरोधेन साहित्यं तदेव जलं श्रुतीनां न्यायानां च भूयस्त्वात्तत्साहित्यानां च भूयस्त्वमिति बहुवचननिर्देशः तैर्जलैराक्षालिते ईश्वरविषयकविप्रतिपत्तिनिरासेन शुद्धीकृते येषां प्रतिवादिनां हृदये पदं स्थानं नादधासि तेऽपि ते प्रतिवादिनः लोहवत् अतिकठिनहृदया इत्याशयः ।

२ हीरकादेरप्यतिकठिनत्वात्तद्विहाय लोहे दृष्टान्ततायाः उपन्यासः क्षालितस्य द्रुततरमालिन्यस्य लाभायेति भावः ।

इत्येष नीतिकुसुमाञ्जलिरुज्ज्वलश्री–

र्यद्वासयेदपि च दक्षिणवामकौ द्वौ ।

नो वा, ततः किममरेशगुरोर्गुरुस्तु

प्रीतोऽस्त्वनेन पदपीठसमर्पणेन (१) ॥ १६ ॥

इति पञ्चमस्तबकः ।

नो वासयेत् ततः किमस्माकम् ॥ १९ ॥

इति श्रीहरिदासभट्टाचार्य्यविरचितकुसुमाञ्जलिकारिका-

व्याख्यानं समाप्तम् ॥

समाप्तोऽयं ग्रन्थः ।




१ एव न्यायकुसुमाञ्जलिर्दक्षिणवामकौ द्वौ सुजनदुर्जनौ वासयेत् निरञ्जयेत् यद्यपि कुसुमाञ्जलिर्दक्षिणवामकौ वासितौ करोति । अथ कुतर्करसिकं जनं कथं वासयिष्यति, इत्यत आह नवेति, दुर्जनवासनमस्तु नोद्देश्यं किन्तु अमरेशस्य इन्द्रस्य गुरोर्बृहस्पतेर्गुरुरुपदेष्टा महादेवः प्रीतो भवतु तत्प्रीतिरेवोद्देश्या पदपीठे समर्पितः सोऽयं कुसुमाञ्जलिः इत्यर्थः ।

# सूचीपत्रम् ।

| | रु० | आ० | पा० |
|---|---|---|---|
| १ कारिकावली मुक्तावली-दीनकरी स० शब्दखण्डपर्यन्तं रामरुद्रीसहिता च | ३ | ० | ० |
| २ कारिकावली मुक्तावली-दीनकरी-भ्यामुपेता टिप्पणीसहिता च .... | २ | ० | ० |
| ३ न्यायकुसुमाञ्जलिः मकरन्दोद्भासित-प्रकाशसमेतः .... .... | ५ | ८ | ० |
| ४ जागदीशीपञ्चलक्षण्याः कालीशङ्करी | ० | २ | ० |
| ५ माथुरीपञ्चलक्षण्याः कालीशङ्करी .... | ० | २ | ० |
| सिद्धान्तलक्षणस्य कालीशङ्करी .... | ० | ८ | ० |
| विभक्त्यर्थनिर्णयः खण्ड ५ सु सम्पूर्णः | ६ | ० | ० |
| ?ागदीशीटीका १३ खण्डेषु सम्पूर्णा | १३ | ० | ० |
| ?थुरी पञ्चलक्षणी सिंहव्याघ्रसहिता | ० | २ | ० |
| ?ादः मूलमात्रम् .... .... | १ | ४ | ० |
| ?ातिकम् .... .... .... | ४ | ८ | ० |
| ?सूत्रपाठः मूलमात्रम्.... .... | ० | २ | ० |
| ?दार्थदीपिका .... .... .... | ० | ८ | ० |

?तिरिक्तान्यपि सर्वविषयाणि पुस्तकान्यस्मत्कार्यालये समु-?न्ते अपेक्षावद्भिर्निर्दिष्टस्थाने पत्रव्यवहारः कर्तव्यः ।

पुस्तकप्राप्तिस्थानम्

## हरिकृष्णदासः

?( गुप्त बुकडिपो ) कार्यालयाध्यक्षः

कचौरीगली, बनारस सिटी ।